रूपिण्यां मायायां विलीनाऽभवद् । गुणविकृतिं परित्यज्य रेखारूपा माया बिन्दुरूपे परमात्मनि सुप्ता । एवञ्च रेखायाः, मायायाः, अक्षरस्य, सृष्टेश्च परमात्मैक्यमस्तीति बोध्यम् ।

अत एव जडचेतनात्मकसृष्टिसहिता माया, स्वरव्यञ्जनसहितः वर्णराशिः, रेखायुक्तश्च बिन्दुः, इत्येतेषां स्वरूपं परमात्मेति कृत्वा 'तस्य वाचकः प्रणवः' इति प्रणवोऽपि एतद् गुणैः परिपूर्णः सकलैश्वर्य प्रकाशकोऽवश्यं भवितुमर्हति । इति ओङ्कारस्य वैलक्षण्यम् ।

**बिन्दुरूपस्य परमात्मनो रेखारूपमायायाः अक्षरसृष्टेश्च पुनः सूक्ष्मो विमर्शः—**

बिन्दुशब्दोच्चारणेनैव मनस्येका वर्तुलाकृतिः प्रादुर्भवति । तथैव हस्तेन पत्रपटादिषु आकारो निष्पाद्यते । लेखन्या यदेकं महच्छून्यं विलिख्यते तद् बिन्दोः स्थूलाकारोऽस्ति । एष च आकार एव -o-अस्ति । अस्मिन्नाकारे या कृष्णा रेखा दृश्यते न सा बिन्दुः, किन्तु तदन्तर्गतः श्वेतभागो बिन्दुः, इदमेव बिन्दोः व्यक्तं स्वरूपं मन्तव्यम् । रेखायां तिरोहितायां तु बिन्दोरव्यक्तं स्वरूपमायाति । तच्च व्यापकम्, परिच्छेदिकाया रेखाया अभावात् । एवमेवेदं विचारणीयं यद् अव्यक्तबिन्दोः स्वरूपव्यापकं तथा निर्गुणस्य परमात्मनोऽपि मायाशून्यत्वेन निरपेक्ष्यं व्यापकं स्वरूपं मन्यन्ते । वर्तुलरेखाकृतोपाधिना परमात्मनः सगुणत्वमायाति । गतिरूपोपाधिना रेखात्रयात्मको रेखारूपो भवति । यथा नदी स्वयं प्रवाहरूपेण मध्य-रेखा भूत्वा द्वाभ्यां पक्षाभ्यां द्वे तटरेखारूपे कृत्वा रेखात्रयवती सती प्रवहति । तथैव रेखैका या दृष्टिपथमायाति, तिसृणां व्यक्तरेखाणां जननी । उभयोर्ये पूर्वयोः द्वे रेखे मध्ये चैका इति सिद्धान्तः । एवमेव सगुणपरमात्मा 'सोऽकामयत बहु स्याम्' इत्युत्थानरूपेणोपाधिना व्यक्त-गुणत्रयात्मकमायारूपेणाविर्भवति ।

त्रिगुणरेखाया दृष्टगत्याक्षररूपता यथा प्राप्यते, तथा त्रिगुणात्मिकाया मायायाः कामकर्माद्यने-कोपाधिसम्बन्धवशादतर्क्यसृष्टिरूपता सम्बध्यते, एवंरूपेण व्यापकपरमात्मैवाव्यक्तो बिन्दुः । सगुण-परमात्मा व्यक्तो बिन्दुः, त्रिगुणात्मिका माया त्रिगुणा रेखासृष्टिश्च ओमित्यक्षरम् । इत्येतेषां सर्वेषामैक्यरूपं सम्बलं न मनागपि भेदः ।

अत्र विषय इदमपि सूक्ष्मावलोकनीयम् अव्यक्तबिन्दुः परमात्मा च निरपेक्षकव्यापको निर्गुणश्च तत्र वाक्प्रवृत्तिर्न भवति 'यतो वाचो निवर्तन्ते' सिद्धान्तात् । व्यक्तिविषयिकैव वाक्प्रवृत्तिः । व्यक्त-बिन्दुश्च प्रकृतिपुरुषोभयात्मकः स्वस्थाने निश्चलोऽयं बिन्दुः । तस्मिन् मायास्थिततमोगुणः जडोपाधि-सत्त्वात् । तत्रोपाधौ परमात्मनः सन्देशोऽभिव्यक्तः । यदा च स एव बिन्दुः गतिं प्राप्य रेखारूपो भवति, तदा मायास्थचलन-वलनात्मकं रजोगुणवशात् परमात्मनः संदंशेन सह चेतनांशोऽप्यभिव्यक्तः, तदनु रेखाया विकृतिरूपोपाधिना बिन्दुरक्षररूपोऽभवत् । तत्र मायास्थसत्त्वगुणोपाधिना परमात्मन आनन्दांशोऽप्यभिव्यक्तः । अतश्चेदमालोच्यताम्—सच्चिदानन्दघनः परमात्मा सत्त्वरजस्तमोगुणवती माया, एतौ च प्रकृति-पुरुषौ वाच्यौ । नादस्वरवर्णात्मकः प्रणवो बिन्दुरेखाक्षराकृतिमानयम्, 'ॐ' इत्येव तस्य वाचक इत्येतेषामेकरूपेण व्यक्ताभेदोऽस्ति । एतत्तत्त्वमवश्यं विचारणीयम् ।

यथा चित्रकलानिपुणेन शिल्पिना निर्माणेच्छया मृत्पिण्डं पुरतः संस्थाप्यास्मादेकं, द्वे, बहूनि च चित्रवस्तूनि सम्पादयिष्यामि, इति तस्य मनसि यथा कल्पना प्रादुर्भवति, तानि सर्वाणि वस्तूनि तस्मिन्

पूर्वमेव वर्तन्ते । इच्छानुगमा कल्पना दृढीभवति । तदाकृतिं निर्मातुं प्रयतते । एवञ्च मूर्तयः स्वोत्पत्तेः प्राग् मृत्पिण्डे यथा व्यक्ता तथैवाव्यक्ता तथैवाखिला सृष्टिः साकारभवनात् प्राग् निराकारतया मायायामव्यक्ता । तेन अव्यक्तरूपेण सह माया परमात्मनि लीना भवति,तदा समेषां मूलबिन्दुः परमात्मैवास्ति । मूर्तीनां कारणं मृत्पिण्डोऽपि स्थूलबिन्दुरेव्न अव्यक्तो बिन्दुः व्यापकः, व्यक्तबिन्दुस्तु रेखायुक्त इति प्राङ् निवेदितम् ।

यावन्तो निष्प्राणपदार्था मृत्पाषाणप्रभृतयस्ते सर्वे परमाणूनां संयोगेन जाताः । परमाणोश्च स्वरूपं बिन्दुरूपमेव । स्थूलानां जडपदार्थानां घर्षणादिकैरुपायैः आकृतिर्नाशयितुं शक्या, तत्र परमाणूनां राशिरेवावशिष्यते । तस्य विनाशस्तु कर्त्तुमशक्य इति स परमात्मनो रूपम् । अत एव न्यायशास्त्रविद्भिः परमाणुभिरेव द्व्यणुकादिक्रमेण सृष्टिरित्युद्घोष्यते । प्रत्यक्षमनुभूयताम्–तुषाराणां संयोगेन जलं जायते । तुषारश्च बिन्दुरूप एव । किं बहुना, बिन्दुशब्देन जलबिन्दोरेव प्रतीतिर्लोकसिद्धा । अन्यच्चेदं द्रष्टव्यम्–पुष्पफलवतां वल्लीवृक्षादीनामुत्पत्तिर्बीजाद् भवति । बीजस्याकृतिस्तु प्रायशो वर्तुला बिन्द्वाकृतिरेव[13] ।

यद्यपि बीजस्याकृतिः सर्वत्र न वर्तुलैव; अपि तु क्वचिल्लम्बा, क्वचन चतुष्कोणा, क्वचन त्रिकोणा इत्यादि । तथापि बीजस्योपरितनभागे एकं कवचं भवति, तदन्तर्गतं बीजं तत् काठिन्यात् प्राग् रसभयेन बिन्दुरूपेणैव तिष्ठति, प्रथमं पुष्पोद्भवः, तत्परिपाकाद् यदा तत्रत्यं मधु घनं भवति ततस्तत्पुष्पं शुष्यति । तस्य मूले मधुनो लघुपिण्डिका जायते, तस्य संरक्षणाय कवचमुत्पद्य पुष्पं निर्गिलति । ततः फलाकृतिमनुलक्ष्य वृद्धिं प्राप्य स मधुबिन्दुरप्येकत्वेनानेकत्वेन वा तत्र परिणमति । ये चाफला अपुष्पा वनस्पतयस्तेऽपि जलसंयोगे प्ररोहन्ति । तत्रापि रजःकणास्ते जलबिन्द्ववयवोत्पत्तौ कारणमिति तेषामपि बीजं ग्रन्थिपर्णादौ वर्तत एव[14] ।

**व्यक्तेन्द्रियाणां प्राणिनामुत्पत्तिप्रकारः–**

अव्यक्तेन्द्रियाणां वृक्षवल्लीप्रभृतीनामुत्पत्तिप्रकारमुक्त्वा व्यक्तेन्द्रियाणां सः प्रकार उच्यते । ते च त्रिविधाः–(1) जरायुजाः, (2) अण्डजाः, (3) स्वेदजाश्च । तत्र जरायुजानामण्डजानाञ्चोत्पत्तिः रेतसो रजसश्च संयोगात् । रेतो जलबिन्दुर्मधुस्थानीयम्, रजश्च पुष्परजःकणस्थानीयम् । अत एव पुष्पवत्याः स्त्रिया रजोदर्शनं संजातमित्युच्यते ।

अनयोरुभयोर्बिन्द्वोः सम्मेलनाद् गर्भधारणं भवति यस्य बिन्दोराधिक्यं तद्वशात् पुरुषरूपा स्त्रीरूपा वाऽऽकृतिर्जायते । यद्यपीमा आकृतयः स्वातन्त्र्येण स्त्रीपुंसस्वरूपा उपलक्ष्यन्ते, तथापि प्रत्येकाकृतिषु वामदक्षिणाङ्गयोर्गौणप्रधानभेदोऽस्त्येव । पुरुषस्य दक्षिणमङ्गं प्रधानम्, वामं तु गौणम्, तदनुरोधेन बलस्यापि तारतम्यं भवति । एवं स्त्रीणां वामाङ्गं प्रधानम्, दक्षिणं त्वप्रधानम्, तस्या वामशरीरे दक्षिणाङ्गाद् बलाधिक्यम् । तथापि पुरुषवामशरीराद् न्यूनमेव दक्षिणाङ्गात्तु सुतरामेव । अत एव स्त्री वामाङ्गी इत्युच्यते । न्यूनशक्तेरधिकशक्त्यायत्तत्वात् ।

सा स्वभावेनैव पुरुषाधीना न स्वतन्त्रा । उक्तञ्च राजर्षिमनुना–

"पिता रक्षति कौमारे भर्ता रक्षति यौवने ।
रक्षन्ति स्थविरे पुत्राः न स्त्री स्वातन्त्र्यमर्हति[15]" ॥

अपरञ्चैतदपि मार्मिकप्रमाणं द्रष्टव्यम्–मनुष्यस्य अन्यप्राणिनो वा शरीरे द्वौ भागौ समानौ वर्तेते। द्वे नेत्रे, द्वौ कर्णौ, नासापुटे द्वे, स्कन्धौ द्वौ, पादौ च द्वौ, इत्येवं सर्वे अवयवा द्वन्द्वीभूय वर्तन्ते। उदरे मुखे चापि मध्यवर्तिन्या रेखया द्वौ भागावनुमातव्यौ। अनया च रीत्या मनुष्याकृतिः स्वभावेन द्वेधाभूता संहिताऽस्तीति परिज्ञायते।

यद्यपि शरीरेऽवयवानां द्वन्द्वमस्ति, तथापि ताभ्यामेकैव क्रिया घटते, अतश्च द्वन्द्वेऽपि परस्परं सापेक्षत्वभावनया स्त्री-पुरुषयोः स्वाभाविकः स्नेहः परस्परमिति विज्ञानम्।

एवमेवाण्डजानामपि मूलं बिन्दुरेव। तत्र इयान् भेदः। जरायुजः प्राणी पूर्णावयवः सन् गर्भाशयाद् बहिरागच्छति। अण्डजस्तु निरवयवोऽण्डाकारेण गर्भाशयाद् बहिरागत्य पुनः कोटरादौ तस्मिन्नण्डेऽवयवैरात्मानमभिसम्पाद्याण्डनिर्भेदादुत्पद्यते। अत एव द्विजशब्देनापि व्यपदिश्यते। कीटपतङ्गादयः स्वेदजाः 'विकृतानां पृथिवीजलोष्मणां संयोगाद् यो वाष्पबिन्दुर्जायते (शरीराद् विनिर्गच्छति) स स्वेद इत्युच्यते"। निदाघसमये शरीरे यो घर्मः समुत्पद्यते, तस्मिन् शरीरजो मलः, जलम्, ऊष्मा चेति त्रितयमुपलभ्यते। मस्तके मलिनवस्त्रादौ च यूका-लिक्षादयो घर्मादिव जायन्ते। एवञ्च स्वेदज-प्राणिनामुत्पत्तेर्मूलं कारणं बिन्दुरेव।

एतावता इदमागतं यत् समग्रस्य मूलकारणं प्रणवाख्यो बिन्दुरेव। यस्य व्यक्ततायाः प्राक् समस्तं जगत् तत्रैव लीनमासीत्। सृष्टिकाले त्वनन्तानि नामरूपाणि तु तत एव प्रादुर्भवन्ति, तत्रैव च स्थितानि, तत्रैव च लीनानि भवन्ति। तथा चोक्तम्–'ॐ' **इत्यक्षरमिदं सर्वम्**"[16]।

●

---

1. श्रीमद्भागवतम्, 12/6/37।
2. तत्रैव, 12/6/39।
3. तत्रैव, 12/6/40।
4. तत्रैव, 6/2/41।
5. तत्रैव, 6/2/42।
6. तत्रैव, 6/2/43।
7. महाभाष्ये, सूत्र-संख्या–1/2/39।
8. अव्यक्तबोधः, पृ. 47-49।
9. तत्रैव, पृ. 49-50।
10. वै. लं. म. बौद्धार्थः, पृ. 36।
11. अव्यक्तबोधः, पृ. 51-53।
12. इत्येतद् रहस्यं महाराष्ट्रभाषया विरचिते स्वानन्दसाम्राज्य-सृष्टिवर्णन-प्रस्तावे द्रष्टव्यम्।
13. अव्यक्तबोधः, पृ. 7-74।
14. तत्रैव, पृ. 74-75।
15. मनुस्मृतिः, 9/3।
16. माण्डूक्योपनिषद्, 1/1।

# तान्त्रिको योगः स्वरूपं मीमांसा च

डॉ. रुद्रदेवत्रिपाठी

**तन्त्रशब्दार्थः परिभाषा च**

'तन्त्र'शब्दं बहुधा व्याचख्युः शास्त्रकाराः। येषु प्रामुख्येन–'सिद्धान्त–शासन-प्रबन्ध-व्यवहार-नियम-वेदशाखा-शिव-शक्त्योस्तथान्यासां देव-देवीनां पूजा-विधान-शास्त्र-कर्मकाण्डागम-पद्धति-विविधोद्देश्यपूरकोपायाद्यर्थाः कोशकाराभिमताः सन्ति। यथोक्तं **मेदिनीकोशे**–

**तन्त्रं कुटुम्बकृत्ये च सिद्धान्ते चौषधोत्तमे।**
**प्रधाने तन्तूद्भवे च शास्त्रभेदे परिच्छदे॥**
**श्रुति-शाखान्तरे हेतावुभयार्थ-प्रयोजने।**
**इतिकर्तव्यतायां च...............................॥ इत्यादि।**

**वाचस्पत्य-कोशे** केचनान्येऽप्यर्था उद्भाविताः, येषु व्युत्पत्तिदृशा–'1. तननं तन्त्रम्, 2. तन्यतेऽनेनेति तन्त्रम्, 3. तन्त्रणं तन्त्रम्, 4. तनोति त्रायते चेति तन्त्रम्' इति विभाव्य विस्तार-धारण-पालनार्थकानां क्रमेण 'तनु-तत्रि-तन्-त्रैङ्' धातूनां प्रयोग-माध्यमेन तन्त्र-शब्दो निरुक्तः। तस्मादेवोच्यते–

**सर्वेऽर्था येन तन्यन्ते त्रायन्ते च भयाज्जनाः।**
**इति तन्त्रस्य तन्त्रत्वं तन्त्रज्ञाः परिचक्षते॥**

किञ्चैतदनुसारं "सर्वेषामनुष्ठानानां विस्तृतिपूर्वकं ज्ञानं तथा तेषां प्रयोग-विशेषेण सम्पादितैः कर्म्मभिः संरक्षणोपलब्धि'रित्ययमर्थस्तन्त्रशब्दस्य सिद्ध्यति। **कामिकागमे**ऽपि सोऽयमर्थ एव पद्येनानेन परिपोषितः–

**तनोति विपुलानर्थान् तत्त्वमात्र-समन्वितान्।**
**त्राणं च कुरुते यस्मात् तन्त्रमित्यभिधीयते॥ इति।**

एवं विविधार्थतत्त्वगर्भस्तन्त्र-शब्दः कात्यायनश्रौतसूत्रस्य "कर्मणो युगपद् भावस्तन्त्रम्" (1/7/1) इति सूत्रप्रोक्तसमर्थमङ्गीकुर्वन् सर्वत्र सर्वैर्व्यवह्रियते।

**तन्त्रस्य प्रकारा योगश्च**

'इष्टदेवस्याथवेष्टदेवीनां साधनासूपयोगिनां साधकैरनुष्ठेयानामनुष्ठानानां विधानमेव तन्त्रमस्तीति' दृष्टिमवधार्य विचारणात् तन्त्रस्य मुख्यौ द्वौ प्रकारौ 1. ज्ञानं 2. विज्ञानञ्चेति निर्धार्येते। अनयोर्द्वयोः प्रकारयोराधार एव विविधानामन्येषां प्रकाराणां व्यवस्थापार्थक्येन 'तान्त्रिकज्ञान-तान्त्रिक-विज्ञान'-रूपयोस्तन्त्रसुम्बद्धानां प्रक्रियाणां भूयान् विकासोऽभूत्। इत्थमेव 'योग'–शब्दोऽपि स्वस्मिन् भूयसोऽर्थान्

धारयति । यथा हि कोशकाराः—"संयोगोपाय-ध्यान-सङ्गति-प्रेमच्छल-प्रयोगौषधि-धनलाभ-कौशल-परिणाम-नियमोपयुक्ततोपायचतुष्टय—सामदामदण्डभेद-सम्बन्ध-सद्भाव-शुभफल-वैराग्य-सुयोग-मोदनोपाय-समाधि-चित्तैकाग्र्यसाधनप्रक्रिया-यन्त्र-मन्त्रतन्त्रादिसाध्यक्रिया-प्रभृतीनर्थान् बोधयन्ति । सहैव विभिन्नैराचार्यैरपि योगशब्दमधिकृत्य यथाप्रसङ्गं नानाविधाः परिभाषा अपि विभाविताः सन्ति । एवं सत्यपि सर्वेषामर्थानां सर्वासां परिभाषाणां मूलं महर्षि-पतञ्जलेः—"योगश्चित्तवृत्तिनिरोधः" सूत्रमेव विद्यते । वस्तुत एतत्सूत्रानुसारं चित्तवृत्तेर्निरोधस्तथा तदर्थं विधीयमानानां साधनानामेवाभिधानं 'योग' इति सिद्ध्यति ।

यौगिकीनां प्रक्रियाणां विषये पूर्वाचार्यैरतीव विशदतया विचारा आविर्भाविताः किञ्च योगस्याङ्ग-प्रत्यङ्गानां निरूपणमपि सूक्ष्मातिसूक्ष्म-समीक्षणेन विहितमस्ति । राजयोग-हठयोग-मन्त्रयोग-लययोगातिरिक्तं कर्म-भक्ति-ज्ञानयोगानां विस्तारोऽपि योगस्य सर्वव्यापकतां प्रथयत्येव । व्याकरण-दृशा 'युज्' धातोरर्थद्वयी व्यज्यते—1. योजनं-संयोजनं 2. समाधिः=मनसःस्थैर्यञ्च । प्रायः सर्वैरपि चिन्तकैरेतौ द्वावप्यर्थावाश्रित्य योगस्य सम्बन्धोद्योतनाय स्वाः स्वाः परिभाषाः पुरस्कृताः । "धर्मव्यापाराध्यात्मिक-भावना-समताविकास—मनोविकारक्षय-मनोवचःकर्म्मसंयमात्म-विशुद्धि" प्रभृतीनां प्राप्तये क्रियमाणाभिः साधनाभिरात्मनो मोक्षेण सह संयोजनस्य भावस्तासु तासु परिभाषासु समाविष्टः[1] जैन-बौद्ध-सम्प्रदाययोरपि तादृश्यै भावनायै सुतरामभिव्यक्ति-प्रदायकः 'कर्म्म-विशेष' एव 'योग' इति स्वीकृतिः परं ताभ्यां स्वाः स्वाः कतिपयाः पारिभाषिकाः शब्दा अपि निर्धारिताः सन्ति, ये तेषामागमानां पिटकानां च परिधौ समाविष्टानां प्रक्रियाणां परिशीलनेन साकमेव साम्प्रदायिकानि साधना-तत्त्वान्यपि परिलक्ष्यन्ति ।

योग-परम्परायां 'ज्ञानस्य क्रियायाश्च' कोऽप्यपूर्व एवास्ति समन्वयः । ज्ञानक्रिये चैते यदा बाह्यभावेनानुष्ठीयेते, तदा ताभ्यामुत्तमं स्वास्थ्यमान्तरिक उल्लासः शरीरावयवानां समुचितं दार्ढ्यं कार्यक्षमता रोगनिवृत्तिर्द्वन्द्वसहिष्णुतादयो गुणा विकसन्ति, ये हि सुव्यवस्थितान्तरिक-साधनार्थमपि नितान्तमावश्यका वर्तन्ते । यदा चान्तर्भावेन योगानुष्ठानं विधीयते, तदा तेन साकमपि ज्ञानेन सह क्रिया विधीयन्ते । तासु क्रियास्वष्टाङ्गानां तथा तदीयानां विभिन्न-भेद-प्रेभदानां प्रबोधनविधानमपि क्रियते । तादृशानुष्ठानद्वारा साधको न केवलं शरीरस्यान्तर्गतानां स्थूलचक्र-सूक्ष्मचक्र-प्रमुखनाडी-तन्त्र-गुच्छरूपस्थ-नाडीसमूहानां क्रियाकारित्वोन्मेषतः प्रभावितान् विधीन् योगमूलकैः साधनैः समाध्युन्मुखान् विदधाति; अपि तु चक्रबीजैस्तत्तत्-साधना-शास्त्र-विधानोदितेष्टदेवता-परिवार-देवता-विशेष-क्रम-प्रोक्तैः सृष्टि-स्थिति-संहारानाख्या-भासा-प्रकारैर्दशाम्नाय-प्रक्रियया ग्रथितैः कूट-रूप-प्रवर्तित-गुरु-मार्गोपदिष्ट-दीक्षाविधान-सम्प्राप्तैस्तैस्तै—र्बीजमन्त्रैर्नाममन्त्रैर्वा सिद्धेः शिखरमपि प्रापयति । यौगिक-क्रियाभिः सह मन्त्रादीनां संयोग एव 'तान्त्रिक-योग'-संज्ञया सम्बोधितो भवति । योगेन सह तान्त्रिक-क्रियाणां समायोग इत्थं तन्त्राणां देव-देवीनां सम्प्रदायानाञ्च वैविध्यं समासाद्य तान्त्रिक-योगमपि वैविध्येन विशदयति ।

**तान्त्रिक-योगस्याङ्गानामुपाङ्गानां च परिज्ञानम्**

योग-साधनार्थं शरीरस्य तथा तदङ्गभूतानामवयवानां ज्ञानं त्वावश्यकमस्त्येव, ततोऽप्यधिकं सूक्ष्मया दृष्ट्या शरीरान्तर्गतानामवयवानां परिज्ञानमपेक्षितं भवति, यतो हि तेषां ज्ञानं विना साधनाऽपूर्णेव तिष्ठति । अस्तीदमेकं शाश्वतं सत्यम् । कथनस्यास्य पुष्टये **श्रीमदाद्यशङ्कराचार्य-प्रणीते–** **'यतिदण्डैश्वर्यविधान'**2–नाम्नि ग्रन्थे स्पष्टतयोक्तमस्ति–

**यतिदण्डे साधनाया ये ये मार्गाः प्रदर्शिताः।**
**तेषां सम्यक्-सिद्धिलब्ध्यै योग-ज्ञानमपेक्षितम् ॥ 3/1 ॥**

तथा प्रसङ्गमिममेव पल्लवयित्वा 1-शरीरस्थचक्र 2-नाडी 3-वायु 4-वायुस्थान 5-वर्ण 6-कार्य 7-इन्द्रियपरिवार 8-आधारादिचक्र 9-चक्राधिष्ठात्रीदेवी 10-चक्र-सृष्ट्यादिक्रम 11-चक्रदेवी 12-नाडीद्वाराचक्रनिर्माणप्रक्रिया 13-प्रमुखषोडशनाडीस्थान 14-नाडीगति 15-विभिन्नसमूहस्थिति 16-स्वरूप 17-सन्निर्मित-चक्र-स्वरूप 18-ग्रन्थिभेदन 19-विभिन्नचक्रान्तर्जप-प्रकार 20-जप-फलादीनां वर्णनमपि विहितमस्ति । तत्रैवेदमपि सूचितं विद्यते यत्–

**जपाच्छ्रान्तः पुनर्ध्यायेद् ध्यानाच्छ्रान्तः पुनर्जपेत् ।**
**जप-ध्यानादि-संयुक्तः क्षिप्रं मन्त्रः प्रसिद्ध्यति ॥ 3/154 ॥**

यद्यपि योग-प्रकारेषु यत्र तत्रोपर्युक्त-विषयाणां वर्णनमपि समुपलभ्यते, तथापि तान्त्रिक-योगस्य यादृशी प्रक्रिया 'यतिदण्डैश्वर्य-विधान'–ग्रन्थे निर्दिष्टा विद्यते नतमां तादृशी कुत्रापि केनापि प्रकाशिताऽस्ति । आचार्यपादैः समग्रस्य शरीरस्य स्वरूप-परिज्ञानां कारयद्भिर्नव-सङ्ख्याकानां शरीराणां परिचयोऽपि कारितो, येषु मस्तिष्के त्रीणि चक्षुषोः कर्णयोश्चैकमेकं हस्तयोः पदोश्च द्वे द्वे इत्थमाहत्य नव शरीराणि भवन्ति । समस्तमपि नाडीजालं शक्तीनां देवीनां नामभिर्व्यवहृतं वर्तते, तथा तासां शक्तीनां तत्तद्-बीज-मन्त्र-नाममन्त्रादिभिस्तज्जालवर्तिनः प्रत्येकमवयवस्य 'तान्त्रिक-योग'-माध्यमेन प्रबोधनं विधाय तस्य स्वाभिलषिते कर्म्मणि प्रयोगो विधातुं शक्यते ।

नैतावदेव, योगशास्त्रेषु वर्णितानां विभूतीनां रहस्यमपि ग्रन्थेऽस्मिन् सजीवानां नाडीनां रूपेण चित्रितमस्ति । साधकः शरीरस्थां कामपि नाडीं प्रबोध्य यथेप्सितां यां कामपि विभूतिं हस्तामलकवत् प्राप्तुं शक्नोति । वस्तुतो यौगिक-विभूतीनामुपलब्धेर्गुरुगममार्ग एव तन्त्रपथः स एव च 'तान्त्रिक-योग' नाम्नाऽभिप्रेतः । यस्य लक्ष्यस्योपलब्धये योगमार्गः कठोरां साधनां निर्दिशति, तस्यैव लक्ष्य-स्यावाप्तिस्तन्त्रविधिना सहजा सरला च भवति । सहैव तन्त्र-विधिनोपलभ्यमाना विभूतयो योगापेक्षयाऽधिकं सुगमाश्चिरं स्थायिन्योऽपि भवन्ति ।

**तन्त्र-योगश्चक्र-विज्ञानञ्च**

योग-ग्रन्थेषु मूलाधार-स्वाधिष्ठान-मणिपूरानाहत-विशुद्धाज्ञानाम्नां षट् चक्राणां विवरणेन सहैव सहस्रारचक्रस्य वर्णनं प्राप्यते, परं तान्त्रिका आचार्य अस्मिन् विषये नूत्न-नूत्ना गवेषणाः कुर्वाणाः सुबहु पुरोवर्धमानाः प्रतीयन्ते । चक्राराधनाया दैनिकीषु प्रक्रियासु काली-कल्प-सुन्दरी-कल्पयोः क्रमानुसारं मूलाधारादधो 1-अकुलसहस्रार 2-विषुवचक्रयोर्विधानं विद्यते । मूलाधारादि षण्णां चक्राणां मध्ये

1-स्वाधिष्ठान 2-मणिपूर 3-अनाहत 4-विशुद्धानि चक्राण्यधोमुखान्यपि मन्यन्ते । किञ्च पूर्वादि-द्वयोर्द्वयोर्दिशोर्योगेन निर्मितानि वह्नि-वाय्वीशान-नैर्ऋत्य-कोणात्मक-चतुश्चक्र-चिन्तन-विधानमपि तन्त्रेष्वेव प्रदर्शितं विद्यते । श्रीविद्याया दक्षिणामूर्तिमते 'स्वस्तिक-चक्र'मेकं विशिष्य स्वीकृतं यच्च मणिपूरानाहत-योर्मध्ये ह्याकुलायाः आङ्ग्लभाषायां sternum शब्दवाच्यायाः पृष्ठेऽस्ति । अस्याकारः स्वस्तिक-सदृशस्तथाऽयं श्वेतवर्णकः । चित्तरूप-हरिहरयोरस्मिन् मननं भवति । अष्टौ दलान्यस्य सन्ति येषु— 'अं कं चं टं तं पं यं शं' चेत्यष्टाक्षरबीजानि वसन्ति । 'प्राणतोषिणी'—तन्त्रग्रन्थे चतुःषष्टि —दलात्मकस्यैकस्य 'ललना-चक्र'स्य तालुनि स्थितिरपि मानिता । अस्माच्चक्रात् प्राक् 'लम्बिका-चक्रं' विशुद्धाज्ञयोर्मध्ये स्वीकृतमस्ति । आज्ञाचक्रस्योपरि 'गुरु-चक्र'स्य शतदलात्मकस्य ब्रह्मरन्ध्रे स्थितिः साधिता । केचनान्य आचार्यः 'सोमचक्र-मानसचक्र—ललाट-चक्र'मपि तत्रैव निर्दिशन्ति । काली-कल्पानुसारमिमान्येव द्वादशचक्राणि शारीराणि निगद्यन्ते ।

आज्ञाचक्रं 'कालीकल्प-सुन्दरीकल्प'योरुभयत्र विभागं मत्वा योगतन्त्रानुसारमाज्ञाचक्रादूर्ध्वमेकै-काङ्गुलवर्तिषु भागेषु 'सप्तकोश' नामकं 'मनश्चक्रं' तथा '1-बिन्दु-2-अर्धचन्द्र-3-रोधिनी-4-नाद-5-नादान्त-6-शक्ति-7-व्यापिका-समना-9-उन्मनी-10-महाबिन्दु-चक्राणां कल्पनमपि विद्यते । यति-दण्डैश्वर्य-विधाने पूज्यपादाद्यशङ्कराचार्यास्तु चक्रक्रममिममष्टोत्तरशतसङ्ख्यां यावत् सूचयन्ति—

**अष्टोत्तर-शते चक्रे मन्त्र-पिण्डाक्षरात्मके ।**

**द्विशतात्मो[3] पुनः प्रोक्त उदयः सर्वसिद्धिदः ॥ इति ।**

**तान्त्रिक-योगः सिद्धयश्च**

सिद्धीनां वर्णनं योगशास्त्रे महर्षिणा पतञ्जलिना विहितं परं तासां प्राप्तयो लक्ष्यसिद्धौ बाधिका इत्यपि तैस्तत्र निर्दिश्य ताभ्य आत्मनो रक्षणायापि निर्दिष्टम् । किन्तु ताः सिद्धयो यद्यकल्पितेन रूपेण प्राप्यन्ते, तदा ता बाधिका नैव भूत्वा साधिका एव सम्पद्यन्ते । अनया दृष्ट्या सिद्धेर्द्वौ प्रकारावङ्गीकृतौ स्तः—1-अकल्पिता सिद्धिः 2-कल्पिता सिद्धिश्च । अनयोरकल्पितायै सिद्धये तान्त्रिकस्य योगस्य नितान्तमावश्यकता भवति । उक्तं च तत्रैवैतदर्थम्—

**मन्त्राणां जपतो योगाद् धारणा-ध्यानतस्तथा ।**

**न्यासात् सम्पूजनाच्चैव सिद्ध्यन्ति सिद्धयस्तु याः ॥**

**अकल्पितास्ताः सम्प्रोक्ताश्चिरकाल-सुखप्रदाः ।**

**प्रान्ते ब्रह्मपद-प्राप्तावपि साहाय्यकारिकाः ॥ 3।9-10 ॥ ( यतिदण्डैश्वर्ये. )**

अत एव मन्त्रजप-योग-धारणा-ध्यान-न्यास-पूजनादि-प्राप्ता अकल्पिताः सिद्धयो ब्रह्मपदप्राप्तये सहायिका इति कृत्वा न भवन्ति ता बाधिकाः । रसौषधि-क्रियासमूहाभ्यास-साधन-प्राप्ताः कल्पिताः सिद्धयः क्षणस्थायिन्यः स्वल्प-सुखावहाश्च भवन्ति, तस्मात् ता बाधिका एव सम्पद्यन्ते ब्रह्मपद-प्राप्ताविति ।

आध्यात्मिकानां साधना-सम्बद्धानाञ्च रहस्यानामुद्घाटनं केवलेन योगेन न सम्भवं भवति । अतिप्राचीनात् कालादियं वार्ता पूर्वाचार्यैर्विज्ञाताऽऽसीत् । तस्मादेव कारणाल्लोककल्याणकारिणस्तन्त्र-

मार्गस्य प्रवर्तनमप्यभूत् । योगनिर्दिष्टानां षण्णां चक्राणां वैशिष्ट्यं परिलक्षयद्भिराचार्यैस्तन्त्रमार्गे तेषामधोमुखत्वं प्रतिपाद्येदमपि दर्शितं यदभ्युदयाकाङ्क्षिभिरधोमुखानां चक्राणां साधनं कर्त्तव्यं किञ्च निःश्रेयस-साधनायोर्ध्वमुखचक्राणां साधनं कर्तव्येति । शरीरस्य मेरुदण्डाग्रे यथा षट्चक्राणां स्थितिरस्ति तथैव करयोः पदोर्मध्येऽपि लध्वाकाराणि षट्-षट् चक्राणि सन्तीत्यपि तान्त्रिकयोगादेव ज्ञायते । अधोमुखचक्रेषु केषां ध्यानमूर्ध्वमुखरूपेण केषाञ्चाधोमुखरूपेण विधेयमिति व्यवस्थापि तान्त्रिक-योगाधीना । चक्राणामुपासनायां जपो ध्यानञ्चोभावेव मान्यौ विद्येते, परं 'जिज्ञासापूर्तिराकर्षण-शक्तिर्बुद्धिविकासो ज्ञान-विज्ञानोपलब्धिः सिद्धिस्तथा स्वेष्टस्य 'स्वरूपैश्वर्य-वैभव-सामर्थ्यमूलक-विभूतीनां च यथार्थोऽनुभवः साधकेन कथं सम्प्राप्य दिव्यतोदयः कर्तुं शक्यत इति मार्गदर्शनं तान्त्रिक-योग-साधनादेव सम्भाव्येत ।

**श्रीचक्रोपास्तौ तान्त्रिको योगः**

नवयोन्यात्मकं श्रीचक्रं-श्रीयन्त्रं महात्रिपुरसुन्दर्याः कामराजविद्यास्वरूपं ब्रह्मरूपेणोपासितं सन्भुक्तिं प्रयच्छति । श्रुति-प्रतिपादितस्यास्य चक्रस्याभिव्यक्तिः स्थूल-बाह्य-सृष्टि-सूक्ष्मान्तःसृष्टिरूपयोर्भवति । श्रीचक्रस्य साधना-पद्धतिर्द्विविधा विद्यते । तत्र बाह्य-साधनायां बाह्यैरुपकरणैः सविध्याराधनं भवति । अपरस्यामन्तःसाधनायां देहेऽधऊर्ध्वस्थ-सहस्रदल-कमले विसृज्य मध्यस्थेष्वष्टचक्रेषु विद्यमानानि षट्त्रिंशत्तत्त्वानि विक्षेपरहितानि विधायाष्टचक्रभेदन-पुरस्सरं कुण्डलिनी-प्रबोधने सति धैर्येणाधोऽ-कुलचक्रादाज्ञाचक्रं यावत् पूर्णे देहे स्थितेषु चक्रेषु श्रीचक्र-भावनया मुद्रासहितमाराधनं विधीयते ।

श्रीयन्त्रस्य मानव-शरीरे स्थितं स्वरूपं ग्रन्थेषु द्विविधं प्राप्यते । श्रीयन्त्रस्यैकं बिन्दुस्थानं स्वाधिष्ठाने द्वितीयस्य च सहस्रारे विद्यते । अनेनैवानुपातेन श्रीयन्त्रस्य निर्माणं सम्पन्नम् । एवं प्रतीयते यद् यतीनां दण्डस्य निर्माणमपि तदाधारेणैव विहितं भवेत् । यतिदण्डैश्वर्यविधाने तु सहस्रारस्य बिन्दोस्त्रयाणां श्रीयन्त्राणां निर्माणं तथा स्वाधिष्ठानस्य बिन्दोर्द्वयोः श्रीयन्त्रयोर्निर्माणं भवति । एतेषां नामानि सन्ति— 1-सृष्टि 2-स्थिति 3-लय 4-अनाख्या 5-भासाख्यानि । एतेषुं पञ्चस्वपि प्रकारेषु श्रीयन्त्रस्य पूजास्तान्त्रिकयोग-पद्धत्या विधातुमन्तर्यागक्रमः सुसाध्यो मन्यते । श्रीचक्र-साधनाया लक्ष्यमात्म-शक्ते-र्विकासोऽस्ति । अन्तःसाधन-प्रक्रियया साधकः श्रीचक्रस्य भावनां यदा स्वशरीरे विदधाति, तदा सोऽनुभवति यन्मम ब्रह्मरन्ध्रं बिन्दुचक्रं, मस्तकं त्रिकोणं, ललाटमष्टकोणं, भ्रूमध्यमन्तर्दशारं, कण्ठो बहिर्दशारं, हृदयं चतुर्दशारं, कुक्षिर्वृत्तं, नाभिरष्टदलं कमलं, कटिरष्टदलस्य बहिर्वृत्तं, स्वाधिष्ठानं षोडशदलं कमलं, मूलाधारः षोडशदलकमलस्य बहिर्वर्त्तिवृत्तत्रयं जानु-जङ्घा-पादाश्च भूपुरस्य तिस्रो रेखाः सन्तीति ।

अथवा मूलाधारादधोगतेऽकुलसहस्रारे चतुरस्रात्मकत्रैलोक्यमोहनचक्राधिष्ठात्र्यणिमाद्यष्टा-विंशति-शक्तिसहित-प्रकटयोगिनीरूपा त्रिपुरा, अधःसहस्रारोपरितने भागे षड्दले त्रिवृत्तात्मकत्रिवर्ग-साधकचक्राधिष्ठात्री-कालरात्र्याद्येकषष्टिशक्तिसहितमातृकायोगिनीरूपा त्रिपुरेशिनी, मूलाधारे चतुर्दले षोडशदलपद्मात्मक-सर्वाशापरिपूरक-चक्राधिष्ठात्री-कामाकर्षिण्यादि-षोडशशक्तिसहित-गुप्त-योगिनीरूपा त्रिपुरेशी, स्वाधिष्ठाने षड्दलेऽष्टदलपद्मात्मक-सर्वसंक्षोभणचक्राधिष्ठात्र्यनङ्ग-कुसुमाद्यष्टशक्तिसहित-

गुप्ततरयोगिनीरूपा त्रिपुरसुन्दरी, मणिपूरे दशदले चतुर्दशारात्मक-सर्वसौभाग्य- दायकचक्राधिष्ठात्र्यनङ्ग-कुसुमाद्यष्टशक्तिसहित-गुप्ततरयोगिनीरूपा त्रिपुरसुन्दरी, मणिपूरे दशदले चतुर्दशारात्मक-सर्व-सौभाग्यदायकचक्राधिष्ठात्री सर्वसंक्षोभिण्यादि-चतुर्दश-शक्तिसहित-सम्प्रदाययोगिनी-रूपा त्रिपुरवासिनी, अनाहते द्वादशदले बहिर्दशारात्मक-सर्वार्थसाधकचक्राधिष्ठात्री सर्वसिद्धिप्रदादिदशशेक्तिसहित-कुलोत्तीर्ण-योगिनीरूपा त्रिपुराश्री, विशुद्धौ षोडशदलेऽन्तर्दशारात्मक-सर्वरक्षाकर-चक्राधिष्ठात्री सर्वज्ञादि-दशशक्तिसहित-कुलोत्तीर्णयोगिनीरूपा त्रिपुरमालिनी, लम्बिकाग्रेऽष्टारात्मकसर्वरोगहरचक्राधिष्ठात्री वशिन्याद्यष्टशक्तिसहित–रहस्ययोगिनीरूपा त्रिपुरासिद्धा, आज्ञायां त्रिदले त्रिकोणात्मकसर्वसिद्धिप्रद-चक्राधिष्ठात्री कामेश्वर्यादि-त्रिशक्तिसहितातिरहस्ययोगिनीरूपा त्रिपुराम्बा तथा सहस्रारे (सहस्रदलपद्मे) बिन्द्वात्मक-सर्वानन्दमयचक्राधिष्ठात्री षडङ्गायुध-दशशक्तिसहित-परापरातिरहस्य-योगिनीरूपा श्रीमहा-त्रिपुरसुन्दरीत्येवं सर्वमात्मनः शरीरं श्रीचक्र-स्वरूपमित्यनुभवति साधकः ।

ईदृश एव तान्त्रिक-योग-निष्णातः साधको 'योगिनी-हृदये' प्रशंसितः । यथा–

**त्रिपुरेशी महायन्त्रं पिण्डाण्डात्मकमीश्वरि !**
**यो जानाति स योगीन्द्रः स शम्भुः स हरिर्विधिः ॥**

तान्त्रिके योगे प्रवृत्त उपासकोऽनेनैव विधिना सर्वासां देवतानां यन्त्राणि स्वशरीरे विभाव्य तत्तन्मन्त्राराधना-पूर्वकं स्वेष्टदेवता-प्रसादं सारल्येनासादितुं शक्नोतीति–

**'सर्वेषु योगमार्गेषु तान्त्रिको योग उत्तमः ।**
**यमासाद्य नरः शीघ्रं कृपां स्वेष्टस्य विन्दन्ति ॥**



---

1. प्रमाणाय निम्नलिखिता मूलांशाः सन्ति निरूपणीयाः–
   (क) योग आत्मा । (तैत्तिरीयोपनिषदि 2/4) ।
   (ख) तां योगमिति मन्यन्ते स्थिरमिन्द्रियधारणाम् ।
   अप्रमत्तस्तदा भवति योगो हि प्रभवाप्ययौ ॥ (कठोपनिषदि 2/6/11) ।
   (ग) अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्ष-शोकौ जहाति । (तत्रैव 1/2/12) ।
   (घ) तत्कारणं साङ्ख्य-योगाधिगम्यं ज्ञात्वा देवं मुच्यते सर्वपाशैः । (श्वेताश्वतरोपनिषदि 6/13)
   (ङ) तथा तैत्ति. 2/4, कठ. 2/6/11, श्वेता. 2/11, 6/3, 1/14, छान्दो. 7/6/1, 7/6/2, 7/7/9, 7/26/11, कौषीतकि. 3/2, 3/3, 3/4 ।
2. अयं ग्रन्थो मया संशोध्य सम्पाद्य हिन्दीभाषयानूद्य च सज्जीकृतोऽस्ति, तस्यैव मूलांशः साम्प्रतं प्रकाशितो जयपुरात् ।
3. 'द्वि-शतात्मा+ओम्' इति च्छेदः । यतिदण्डैश्वर्य-विधान-ग्रन्थे प्रामुख्येन प्रणवस्य 256 मात्राः प्रदर्शिताः । प्रणव एवात्र प्रतिपाद्यम् । तदनुरुध्यैव यतिदण्डे प्रणवोपासनाऽत्रोक्ता ।

# अभिनवयोगभाष्यभूमिका

डॉ. चिन्तामणि-त्र्यम्बककेंधे

अथ योगसूत्राणामभिनवभाष्यम्–

ईश्वरं सर्वभूतानां हृद्देशे सुप्रतिष्ठितम् ।
प्रणम्य तत्प्राप्त्युपायं योगं व्याख्यातुमारभे ॥
स्पष्टं सूत्रेषु निर्दिष्टं किन्तु व्याख्यानजालके ।
पतित्वाच्छन्नरूपं तं योगमुद्धर्तुमुत्सहे ॥
नास्ति मे साधना काचिन्नाधिकारो विशेषतः ।
जिज्ञासया प्रवृत्तोऽहं शास्त्रं सम्यगधीतवान् ॥
सूत्राणामेव शब्देषु प्रणिधाय प्रयत्नतः ।
भाष्यमभिनवं चैतत्तन्यते विनतेन तु ॥

इह खलु शेषावतारत्वेन प्रख्यातेन महर्षिणा पतञ्जलिना चित्तवाक्कायशुद्ध्यर्थं शास्त्रत्रयं प्रचारितमिति प्राचीनाविच्छिन्ना परम्परा । तत्र चित्तशुद्ध्युपायो योगस्तस्यानुशासनसूत्राणि पतञ्जलिमुनिना विरचितानि । गतेषु सूत्रेषु व्यासभाष्यापरनामकं सांख्यप्रवचनभाष्यं प्रथितं विद्यते । तस्यानुव्याख्यानानि सूत्रव्याख्यानान्यन्यान्यपि च बहुशः प्रावर्तन्त । एवं सति कोऽयमभिनवभाष्यरचनायां प्रयास इति । उच्यते–भाष्यकारादीन् पूर्वसूरीन् श्रद्धयादरेण च प्रणम्येदं निवेद्यते । विदुषां पूर्वसूरीणां व्याख्यानानि निःसंशयं प्रौढभाषानिबद्धानि विद्वत्तापूर्णानि च । किं तु सूत्रकारस्याभिप्रायः सम्यग् न विवृतस्तैः । यतो हि बहुत्र सूत्रकारेण विरोधो व्याख्याकाराणां दृश्यते । न चासौ विरोधाभासो निरासासंभवात् । अत एव सूत्रकाराभिप्रायमेव सम्यग् विशदीकर्तुमभिनवभाष्यमिदं प्रणीयते । तस्य साफल्ये वैफल्ये वा विद्वांस एव प्रमाणम् ।

प्रारम्भ एव योगः समाधिरिति प्रतिपादयन् भाष्यकारः सूत्रकारं विरुणद्धि । सूत्रेषु हि योगस्य समाधेश्च पृथग् लक्षणे कृते । योगभेदाः समाधिभेदाश्च पृथक् प्रतिपादिताः । अत्रैव भाष्यकारोऽमूमुहत् सर्वानपि व्याख्याकारान् । नैकेनापि व्याख्याकारेण सूत्रशब्देषु किंचिदवधानं प्रदत्तम् । अपि त्वन्धपरम्परा-न्यायेन सर्वैरपि भाष्यकारस्यैवानुसरणं कृतम् । सूत्रशब्दान् सम्यगवधारयन् न कश्चिदपि योगसमाध्योरेकत्वमभ्युपेयात् । संप्रज्ञातासंप्रज्ञातौ तथा तयोरुपभेदाश्च योगभेदाः सबीजनिर्बीजौ तयोरुपभेदाश्च समाधिभेदाः । तत्र संमोहो भाष्यकारमनुसृत्य सकलैरपि व्याख्याकारैः प्राचीनैरर्वाचीनैश्च कृत इत्यहो महानयं भाष्यकारस्य प्रभावः । यदि संप्रज्ञातोऽपि समाधिः सबीजोऽपि

समाधिस्तयोरनर्थान्तरं पु' तर्हि किमिति पृथक्संज्ञे कृते शास्त्रे ? नैतत् किं शास्त्रे दोषमावहति ? तदेतन्न केनापि चिन्तितं येन दूषितं योगशास्त्रमिति सखेदं वस्तुमुत्सहे । अत एव महतामपि विरोधमुपसह्य शास्त्रस्य विशुद्धस्वरूपं विशदीकर्तुमभिनवभाष्यप्रणयनेऽयं प्रयासः क्रियते ।

अपि च योगः समाधिरिति ब्रुवता भाष्यकारेण 'युजिर्योगे' इति निवर्त्य 'युज् समाधौ' इति निरुक्तिः स्वीकृता । तदपि न कथंचिदपि युक्तिसहम् । वेदमन्त्रेष्वपि योगशब्दो 'युजिर्योगे' इत्यस्मादेव धातोः सिद्धो दृश्यते । वर्णयन्ति च संप्रदायविदो–

**"योऽपानप्राणयोर्योगः स्वरजोरेतसोस्तथा ।**
**सूर्याचन्द्रमसोर्योगो जीवात्मपरमात्मनोः"** ॥ इति ।

सोऽयं योगः साधनरूपः समाधिश्च साध्यरूपः । योगाङ्गेषु सबीजसमाधेरन्तर्भावो न कथंचिदपि योगसमाध्योरेकत्वे प्रमाणम् । नात्र कथंचिदपि संमोहो युक्तः । न चासौ दृश्यते सूत्रशब्देषु । 'विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम्' इति न्यायेन नात्र भाष्यप्रामाण्यं स्वीकार्यम् । कोषेष्वपि 'युजिर्योगे' इत्येवानुरुध्य 'योगः संनहनोपायध्यानसंगतियुक्तिषु' इत्याद्युक्तम् । सोऽसौ योगोऽनादिकालात्प्रवृत्तौ भारतवर्षे बहुविधं विकासं प्राप्तवान् । अस्य प्रणेतृविषये परम्पराभेदमेवाभ्युपगम्यते–

**"हिरण्यगर्भो योगस्य वेत्ता नान्यः पुरातनः ।"** इति ।

पतञ्जलेः पूर्वं हैरण्यगर्भं योगशास्त्रप्रख्यातमासीत् । यद्यप्यद्यतने काले विनष्टमेतत्तथापि तद्विषयकाः संदर्भाः प्राचीनग्रन्थेषु तत्र तत्रोपलभ्यन्ते । तथा हि वैष्णवसंहितासु 'अहिर्बुध्न्य' नाम्न्यां संहितायां विस्तरेण वर्णितम्–

**"विष्णुसंकल्परूपं च महद्योगानुशासनम् ।**
**हिरण्यगर्भादुद्भूतं तस्य भेदानिमाञ्शृणु"** ॥ इत्यादि ।

अतिविस्तृतस्य भोगशास्त्रस्येदं वर्णनं संहिताकारेण मूलं दृष्ट्वा लिखितमिति नैव वक्तुं शक्यते । तेन न तत्सर्वथा प्रामाणिकम् । किं तु हैरण्यगर्भयोगशास्त्रविषयिकां परंपरा तु नितरां द्रढयति तत् । ब्रह्मसूत्रशांकरभाष्येऽपि 'अथ तत्त्वदर्शनोपायो योगः' इत्युद्धरणं प्राचीनयोगशास्त्रादुद्धृतं तच्च नान्यहैरण्यगर्भाद्योगशास्त्रादिति विदुषां संमतिः । सनत्सुजातीयशांकरभाष्येऽपि हिरण्यगर्भस्योद्धरणान्युपलभ्यन्ते । यथा–उक्तं च हिरण्यगर्भे–

**"अन्नाङ्गनादिकोषेषु भावो मान इति स्मृतः ।**
**ब्रह्मानन्दसुखप्राप्तिहेतुर्मौनमिति स्मृतम्"** ॥ 2.41 ॥

तथा च हिरण्यगर्भे–

**"या शुद्धा चिद्घनानन्ता गुणरूपविवर्जिता ।**
**आनन्दाख्या परा शुद्धा ब्राह्मी श्रीरिति कथ्यते ॥"** ॥ 3-42 ॥

उक्तं च हिरण्यगर्भे–

**"यथा पान्थस्य कान्तारे सिंहव्याघ्रमृगादयः ।**
**उपद्रवकरास्तद्वत्क्रोधाद्या दुर्गमा नृणाम्"** ॥ इति ।

अपि च विष्णुपुराणे श्लोकद्वयं हिरण्यगर्भादुद्धृतं यथा–

**'संमानना परां हानिं योगर्द्धेः कुरुते यतः।**
**जनेनावमतो योगी योगसिद्धिं च विन्दति ॥**
**तस्माच्चरेत वै योगी सतां धर्ममदूषयन्।**
**जना यथावमन्येरन् गच्छेयुर्नैव संगतिम्** ॥ 2.13.42,43 ॥

इति। तस्मान्महाभारतादिषु–

**'हिरण्यगर्भो योगस्य वेत्ता नान्यः पुरातनः॥'**

इति यदुक्तं तस्य प्रामाण्यं संदेहातीतम्। तदेतद्योगशास्त्रं वैदिकं योगशास्त्रमेवासीदित्यत्रापि नास्ति संदेहः। दुरूहत्वाद्वा विस्तृतत्वाद्वाऽन्येन वा केनचित्कारणेन पतञ्जलिमुनिना स्वीयशास्त्रस्य प्रणयनं कृतम्। वैदिकत्वे चास्यायमभिप्रायो यद्वैदिकसंहितोपनिषदादिषु भगवद्गीतोपनिषत्सु स्मृतिपुराणादिषु च यद्योगस्य विवेचनमुपलभ्यते तदनुसारं विरचितमासीद्धैरण्यगर्भयोगशास्त्रम्। तदेव च मूलं पातञ्जलयोगशास्त्रस्य।

वेदबाह्यैरप्याचार्यैर्योगः स्वीकृतः प्रतिपादितश्च। तेषु प्रधानौ गौतममहावीरौ। भगवता तथागतेन बुद्धेनाराडकालामादिभ्य आचार्येभ्यो योगोऽधीतः। स्वयं च महाबोधिपर्यन्तं योगानुष्ठानं कृतम्। तदूर्ध्वं च बहुजनसुखाय बहुजनहिताय च यदुपदिष्टं तदपि योगशास्त्रमेव। तेनैव भगवान् बुद्धो योगिनां चक्रवर्तित्वेन प्रशस्यते। एवमेव तपोनिष्ठेन महावीरेण तत्पूर्वैश्च तीर्थंकरैः कष्टसाध्यो योग एवानुष्ठितः। महती ह्येषापि परम्परा। एवं च जैनयोगशास्त्रमपि कष्टसाध्यं परम्परायां सुरक्षितं वर्तते। वेदबाह्यत्वेऽपि नास्याः परम्पराया महत्त्वं कथंचिद्धीयते। पातञ्जलसूत्रेषु पञ्चोपायप्रतिपादनेऽन्यत्रापि तत्र तत्र बौद्धपरम्परा ससंमानं निर्दिष्टा। महाव्रतादिवर्णने च जैनपरम्परा। एवं चास्या योगपरम्परायाः सम्यगध्ययनमपि पातञ्जलयोगव्याख्यानार्थं नितरामावश्यकम्। यावच्छक्यं योगशास्त्रमधीत्य पूर्वसूरीणां व्याख्यानान्यपि सूक्ष्मेक्षिकया दृष्ट्वा पाश्चात्त्यदर्शनानि विशेषतश्च मनोविज्ञानं सपरिश्रमं पठित्वा तदूर्ध्वमभिनवभाष्यलेखनचापले प्रवृत्तोऽहं नात्यन्तमुपहसनीयः स्यामित्याशासे। विस्तरस्तु यथास्थानं भाष्ये करिष्यत एव।

व्याचिख्यासितस्य योगशास्त्रस्येदमादिमं सूत्रम्–

**अथ योगानुशासनम्** ॥ १ ॥

अत्राथशब्दो निगदमात्रेण माङ्गलिकः।

**ऊँकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा।**
**कण्ठं भित्त्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ** ॥ इति।

वाक्यार्थे तु भाष्यानुसारमधिकारार्थ एव। योगानुशासनं शास्त्रमाग्रन्थान्तादधिकृतं वेदितव्यम्। अनुशासनमित्यनेनेदं प्रथमतया रचितमिदं शास्त्रमिति सूत्रकारः सूचयति। यस्यानुसारमिदं शास्त्रं विरचितं तत्तु प्राधान्येन हैरण्यगर्भं योगशास्त्रम्, यस्य च्छायायां निखिलं योगशास्त्रं पतञ्जलेः पूर्वं विकसितमासीत्। तथाप्यन्या अपि परम्परा अत्र वैदिका अवैदिकाश्च समाविष्टा आशास्त्रान्तं वेदितव्याः।

# प्रामाण्यवादः

**डॉ. उमारमणझाः**

प्रामाण्यवादो दार्शनिकानां कृते प्रमुखो विषयोऽस्ति । प्रमाणनिरूपणानन्तरं प्रमाणैरुत्पन्नज्ञानस्य निर्णयार्थं प्रश्नः समागच्छति । प्रामाण्यवादमधिकृत्य नैयायिकानां मीमांसकानाञ्च मध्ये परस्परं विवादः प्रचलति । प्रामाण्यवादः प्राचीनकालादेव शास्त्रार्थस्य विषयः प्रवर्तते । मण्डनमिश्रः प्रसिद्धो नैयायिक आसीत् । यदा श्रीशङ्कराचार्यः शास्त्रार्थं कर्तुं मण्डनमिश्रस्य सकासं गन्तुकाम आसीत्, तदा तेन मण्डनमिश्रस्य गृहं कुत्र इति प्रश्नः एकस्याः दास्याः समक्षं कृतः । तदा सा प्राह—

**"स्वतः प्रमाणं परतः प्रमाणं कीराङ्गना यत्र गिरोर्गिरन्ति ।**
**शिष्योपशिष्यैरुपगीयमानमवेहि तन्मण्डनमिश्रधाम" ॥**

अर्थात् यस्मिन् गृहे शुका अपि स्वतः प्रमाणं परतः प्रमाणमित्यादि जल्पन्ति, तद्गृहमेव मण्डनमिश्रस्य गृहमवेहि । अर्थात् शुकानां मुखेभ्योऽपि स्वतः परतः प्रमाणविचारः निःसरति स्म ।

मीमांसका ज्ञानस्य प्रामाण्यं स्वतः, अप्रामाण्यं परतः स्वीकुर्वन्ति—

**"स्वतः सर्वप्रमाणानां प्रामाण्यमिति गम्यताम् ।**
**न हि स्वतोऽसती शक्तिः कर्तुमन्येन शक्यते" ॥**

(श्लो. वा. श्लो. 47)

किन्तु नैयायिका वैशेषिकाश्च ज्ञानस्य प्रामाण्यमप्रामाण्यञ्च परत एव मन्वते । न्यायमञ्जर्यां जरन्नैयायिको जयन्तभट्टो लिखति—

1. किं विज्ञानानां प्राणाण्यमप्रामाण्यञ्चेति. द्वयमपि स्वतः । 2. उत उभयमपि परतः । 3. आहोस्वित् अप्रामाण्यं स्वतः प्रामाण्यं परतः । 4. उतस्वित् प्रामाण्यं स्वतः अप्रामाण्यं तु परत इति । स्थितिमेतदर्थज्ञानविज्ञानात् प्रामाण्यनिश्चय इति । तदिदमुक्तं प्रमाणतोऽर्थप्रतिपत्तौ प्रवृत्ति-सामर्थ्यादर्थवत्प्रमाणमिति । तस्मादप्रामाण्यमपि परोक्षमित्यतो द्वयमपि परत इति एष एव पक्षः श्रेयानिति । (न्या. म. पृ. 160)

एवंप्रकारेण न्यायवैशेषिकमते प्रामण्यमप्राण्यञ्च उभयमपि परतः स्वीक्रियते । सांख्ययोगयोः प्रमुखग्रन्थेषु प्रामाण्यवादस्य नास्ति विस्तरेण विचारः । सर्वदर्शनसंग्रहे माधवाचार्येण उक्तम्—

**"प्रमाणत्वाप्रमाणत्वे स्वतः सांख्याः समाश्रिताः" ।**

श्लोकवार्तिकेऽपि सन्दर्भो दृश्यते केचिदाहुः द्वयं स्वत इति । अत एव सांख्यदर्शने प्रामाण्य-मप्रामाण्यञ्चेति उभयमपि स्वत एव स्वीक्रियते ।

चतुर्थः पक्षः बौद्धानां वर्तते । सर्वदर्शनसंग्रहे सौगताश्चरमं स्वत इति उक्तम् । बौद्धाचार्यः शान्तरक्षितः तत्त्वसंग्रहे लिखति—न हि बौद्धैरेषां चतुर्णामेकतमोऽपि पक्षोऽभीष्टः अनियमपक्षस्येष्ट-त्वात् । तथाहि उभयमपि एतत्किञ्चित्स्वतः, किञ्चित्परतः इति पूर्वपक्षमुपवर्णितम् । अत एव पक्ष-चतुष्टयोपन्यासोऽप्ययुक्तः, पञ्चमस्यापि अनियमपक्षस्य संभवात् ।

अत्र अनियमपक्षस्याभिप्रायोऽस्ति यदभ्यासदशापन्नज्ञाने प्रामाण्यमप्रामाण्यञ्च उभयमपि स्वतो भवति अनभ्यासदशापन्नज्ञाने उभयमपि परतो भवति। अत एव जैनाचार्येण हेमचन्द्राचार्येणापि उक्तम्—

'तत्प्रामाण्यं स्वतः परतश्चेति । तदुभयमुत्पत्तौ परतः एवं ज्ञप्तौ तु स्वत इति । अत एव प्रामाण्यवादविषये षट् पक्षाः सन्ति—

1. प्रामाण्यमप्रामाण्यञ्च परत इति न्यायवैशेषिकाः । 2. प्रामाण्यमप्रामाण्यञ्च स्वत इति सांख्याः । 3. प्रामाण्यं स्वतः अप्रामाण्यं परत इति मीमांसकाः । 4. अप्रामाण्यं स्वतः प्रामाण्यं परत इति सौगताः । 5. अभ्यासदशापन्नज्ञाने उभयमपि स्वतः अनभ्यासदशापन्नज्ञाने उभयमपि परत इति शान्तरक्षितः । 6. उत्पत्तौ उभयमपि परतः ज्ञप्तौ उभयमपि स्वत इति जैनपक्षः ।

अत एवोक्तम्—

**'प्रमाणत्वाप्रमाणत्वं सांख्ये योगे स्वतो मतम् ।**
**प्राभाकराश्च भाट्टाश्च प्रामाण्यं ब्रुवते स्वतम् ॥**
**अप्रामाण्यं पुनस्तेषां पुंदोषात् परतो मतम् ।**
**उभयं परतो ज्ञेयं प्रोक्तञ्च गौतमे नये ॥**
**स्वतोऽभ्यासदशापन्ने उभयं शान्तरक्षितैः ।**
**अनभ्यासदशायां तैरुभयं परतो मतम् ॥**
**स्वतस्त्वं समुत्पत्तौ ज्ञप्तौ परतस्त्वं तथा' ।**

प्रामाण्यवादो मीमांसकानां प्रमुखः सिद्धान्तोऽस्ति । तेषां मते स्वतः प्रमाणमेव प्रामाण्य-कोटिमारोहति । न परतः प्रमाणं तेषां मते युक्तिसंगतम् । अत एव परतः प्रामाण्यवादिभिः नैयायिकैः सह तेषां प्रबलसंघर्षोऽभूत् ।

इन्द्रियार्थसन्निकर्षोत्पन्नं घटोऽयं पटोऽयमित्याकारकं व्यवसायात्मकं ज्ञानमुत्पद्यते । ततो घटमहं जानामि पटमहं न जानामि इति अनुव्यवसायात्मनो ज्ञानस्य उत्पत्तिः भवति । तदनन्तरं सत्यां सन्देहादिनिवृत्तौ चरितार्थायाञ्च प्रवृत्तौ तज्ज्ञानं प्रामाणिकत्वमुपैति । अतः अनुमितिं द्वारीकृत्यैव तत्प्रामाण्योपपत्त्या तस्य परतः प्रामाण्यं सिध्यति नैयायिकानां मते ।

मीमांसकास्तु स्वतः प्रामाण्यवादमेव स्वीकुर्वन्ति । स्वतः प्रामाण्यवादमधिकृत्य मीमांसकाः यथा प्रतिपादयन्ति, तथा नैयायिकाः न स्वीकुर्वन्ति । तत्र प्राभाकराणां ज्ञानस्य स्वतः प्रकाशत्वं स्वयुक्त्या एवं प्रतिभाति । यथा हि दीपप्रकाशः तादृशघटपटादीन् पदार्थान् ततश्च आत्मानं तदनन्तरं च भूयो तैलवर्तिकादीन् प्रकाशयति । तथैव ज्ञानमपि पूर्वमिन्द्रियसन्निहितं पदार्थजातं ततः स्वरूपं तदनन्तरं ज्ञानाधिकरणमात्मानमभिव्यञ्जयति । अत्रेत्थं विचारणीयम् । प्रत्यक्षे हि तावत्पदार्थज्ञानं, ततो

ज्ञानस्वरूपज्ञानं, तदनन्तरमात्मनोऽभिव्यक्तिरिति । तदिदं प्रत्यक्षं त्रिपुटीप्रत्यक्षनाम्ना अपि उच्यते । स्वतश्चास्य स्वज्ञानजनकसामग्रीत इति भावः । अतः ज्ञानजनकसामग्रीतो यज्ज्ञानमुत्पद्यते, तत एव तत्प्रामाण्यमपि ।

कुमारिलभट्टः किञ्चिद्विलक्षणमेव अभिमनुते अमुं सिद्धान्तम् । तस्य मते घटज्ञाने सति ज्ञातो घट इति ज्ञानमुत्पद्यते । तस्मात् प्रत्यक्षविषयीभूतेऽर्थे ज्ञातताधर्म उपैति । अत्र ज्ञानस्य न स्वयं प्रत्यक्षत्वमपितु ज्ञानधर्मविशेषस्य ज्ञाततालक्षणस्यैव प्रत्यक्षत्वम् । एतज्ज्ञातताधर्मं द्वारीकृत्यैव ज्ञानस्य तत्प्रामाण्यस्य च उदयः संभवतीति ।

मुरारिमिश्रस्य मतं न्यायाभिमतेन सह न कश्चिद्विशिष्टो विसंवादो वर्तते । तन्मते ज्ञानस्यैव प्रत्यक्षत्वम् । इन्द्रियार्थसन्निकर्षे सति व्यवसायात्मकज्ञानोत्तरं घटमहं जानामीत्याकारकमनुव्यवसाय-लक्षणं यज्ज्ञानमुत्पद्यते तदेवानुव्यवसायात्मकं ज्ञानं प्रामाण्यापादकमिति मुरारिमिश्रस्य मतम् । तदेवास्य आचार्यान्तरेभ्यश्च वैशिष्ट्यमिति कृत्वा मुरारेस्तृतीयः पन्था इति प्रसिद्धिः श्रूयते । एतेषां त्रयाणामपि आचार्याणामभिमतस्य तारतम्यपरीक्षया मथुरानाथतर्कवागीशेन चिन्तामणिरहस्ये प्रकाशितं यद् एषु सर्वेषु मतेषु प्रभाकरमतमेव वास्तविकं सुदृढं च प्रतिभाति । अत एव तदेव स्वतः प्रामाण्यवादत्वेनोन्नेयम् । उक्तञ्च—स्वतः स्वाश्रयजनकसामग्रीतः स्वप्रमात्वम् । एतच्च गुरुमते । परतः तदन्यसामग्रीतः, एतच्च मिश्रमतभट्टमतन्यायमतेष्विति दिक् ।

मीमांसकाः स्वतः प्रामाण्यवादिनः सन्ति । तेषां मते स्वतः प्रमाणस्य लक्षणं ज्ञानग्राहकातिरिक्तान-पेक्षत्वं स्वतस्त्वम् । अर्थात् ज्ञानग्राहकसामग्रीतो भिन्नासामग्री प्रामाण्यग्रहाय यत्र न अपेक्षिता स्यात्, तत् स्वतः प्रमाणम् । अर्थात् यत्र ज्ञानं तद्गतप्रामाण्यञ्चेति उभयोः ग्रहणमेकया सामग्र्या भवति, तत् स्वतः प्रमाणमुच्यते । तद्विपरीतं ज्ञानग्राहकातिरिक्तापेक्षत्वं परतस्त्वम् । अर्थाद् यत्र ज्ञानग्राहकसामग्री च भिन्ना स्यात् तदा परतः प्रामाण्यं स्वीक्रियते । मीमांसकानां मते ज्ञानस्य प्रमाण्यस्य च ग्राहिका सामग्री एका एव भवति ज्ञाततान्यथानुपपत्तिप्रसूता अर्थापत्तिः । किन्तु न्यायमते ज्ञानग्राहकसामग्री अनुव्यवसायो वर्तते, एवं प्रामाण्यग्राहकसामग्री अनुव्यवसायादि्भन्नं प्रवृत्तिसाफल्यमूलकमनुमानं वर्तते ।

मीमांसकानां मतं वर्तते—अयं घट इति ज्ञानात् घटे ज्ञाततानामको धर्मः जायते । अयं ज्ञातताधर्मः घटज्ञानात् पूर्वं नासीत् । एतादृशज्ञानोत्पन्नानन्तरम् अयं धर्मः समुत्पन्नो भवति । अत एव अयं घट इति ज्ञानाद् जन्यः अयं ज्ञतताधर्मः । अत एव ज्ञातताधर्मस्य कारणं ज्ञानमेव भवति ।

अस्य ज्ञातताधर्मस्य प्रतीतिः ज्ञातो मया घट इति ज्ञानाद् भवति । अयं ज्ञातताधर्मः स्वकारणज्ञानं विना नोत्पद्यते । अत एव ज्ञाततान्यथानुपपत्तिप्रसूता अर्थापत्तिरेव ज्ञातताधर्मस्य ग्राहिका वर्तते । यदा ज्ञातान्यथानुपपत्तिप्रसूतया अर्थापत्या ज्ञानस्य ग्रहणं भवति, तदा तज् ज्ञानगतप्रामाण्यस्य ग्रहणमपि तया अर्थापत्या एव भवति । एवं प्रकारेण ज्ञानग्राहकसामग्री प्रामाण्यग्राहकसामग्री च एकैव भवति । अतः स्वतः प्रामाण्यं स्वीक्रियते मीमांसकैः ।

नैयायिकानां मते नास्ति ज्ञातताानामकः कश्चित्पदार्थः । अत एव ज्ञाततासिद्धौ मीमांसकानां कृते नूतनो विचारः समापतति । ज्ञाततासिद्धिं विना स्वतःप्रामाण्यस्य सिद्धिः न संभवति । अत एव

मीमांसका विषयत्वान्यथानुपपत्तिप्रसूत्या अर्थापत्या ज्ञाततां संसाधयन्ति । अस्य अभिप्रायोऽस्ति यद् अयं घट इति ज्ञानस्य विषयः घटो भवति, न तु पटः । अस्य विषयस्योपपादनं नैयायिकैः तदुत्पत्ति-सिद्धान्तद्वारां बौद्धैश्च तादात्म्यसिद्धान्तेन क्रियते । क्रिन्तु समाधानद्वयमपि दोषग्रस्तमेवेति मीमांसका वदन्ति ।

तदुत्पत्तिसिद्धान्तस्यायमाशयो भवति यज् ज्ञानं प्रति विषयोऽपि कारणं भवति । अत एव अयं घट इति ज्ञानं घटाज्जायते । अत एव घटज्ञानस्य विषयः घटो भवति, न तु पट इति नैयायिकपक्षोक्तिः वर्तते । अत्र अयं दोषो भवति यद् घटज्ञानं प्रति यथा विषयरूपघटः कारणं भवति, तथैव आलोकोऽपि कारणं भवति । घटोत्पन्नत्वात् यदि घटज्ञानस्य विषयः घटः स्यात्तदा घटज्ञानमालोकादपि जायते । अत एव आलोकोऽपि तस्य विषयो भवेत्; परन्तु न कोऽपि घटज्ञानस्य विषयमालोकं स्वीकरिष्यति । अत एव तदुत्पत्तिमाश्रित्य विषयनियमोपपादनं न कर्त्तुं शक्यते ।

तादात्म्यपक्षः तदाकारपक्षो वा बौद्धानां वेदान्तिनां वा वक्तुं शक्यते । ज्ञानस्याकारेण बाह्यार्थानुमानं बौद्धैः क्रियते । मतमिदं वैभाषिकाणामस्ति । सौत्रान्तिकमते बाह्यार्थानामस्तित्वं स्वीकृत्य ज्ञानं तज्जन्यं तदाकाररूपेण भवति । एतदनुसारं घटस्य तज्ज्ञानयोस्तादात्म्यात् तदाकारत्वाच्च घटज्ञानस्य विषयो घट एव भवति, न तु पटः । तदाकारबलेन तादात्म्यबलेन च विषयनियमोपपादनं न समीचीनं भवति । यतो हि ज्ञानं तद्विषयश्च परस्परं भिन्नरूपेण वर्तते । घटादिविषयाणां बाह्या-स्तित्वं वर्तते, एवं तद्भिन्नस्य ज्ञानस्याभ्यान्तरिकमस्तित्वं वर्तते । अत एव घटस्य तज्ज्ञानस्य तादात्म्यं न संभवति । अत एव ज्ञातताद्वारा मीमांसकाः समाधानं कुर्वन्ति । घटज्ञानादुत्पन्ना ज्ञातता केवलं घटे एव भवति, पटे न भवति । अत एव घटज्ञानस्य विषयः घट एव भवति, न तु पटः । एवं प्रकारेण ज्ञाततामाश्रित्यैव विषयनियमोपपादनं कर्तुं शक्यते । अन्यथा न संभवति । अतः विषयत्वा-न्यथानुपपत्तिप्रसूता अर्थापत्तिरेव ज्ञाततासिद्धौ प्रमाणं वर्तते ।

यदा विषयत्वान्यथानुपपत्तिप्रसूतयाऽर्थापत्या ज्ञाततासिंद्धिः भवति, तदा ज्ञाततास्वकारणरूपं ज्ञानं ज्ञाततान्यथानुपपत्तिप्रसूतया अर्थापत्या साधयति । एवं तया अर्थापत्या एव ज्ञानगतप्रामाण्यमपि गृह्यते । एवं ज्ञानग्राहक-प्रामाण्यग्राहकसामग्र्या एकरूपत्वाज् ज्ञानग्राहकातिरिक्तानपेक्षत्वं स्वतस्त्व-मिति स्वतः प्रामाण्यस्य लक्षणं संघटते । अतः स्वतः प्रामाण्यवाद एव युक्तिसंगत इति मीमांसकपक्षः ।

नैयायिकैः स्वतः प्रामाण्यखण्डनमित्थं क्रियते । मीमांसका विषयविषयीभावस्योपपादनाय ज्ञाततां स्वीकुर्वन्ति, तन्न समीचीनम् । घटस्य तज्ज्ञानस्य च विषयविषयीभावो ज्ञातताबलेन न भवति, अपितु स्वाभाविक एव वर्तते । यदि ज्ञाततामाश्रित्य विषयविषयीभावः स्वीक्रियते तदा तत्र द्वौ दोषौ भवतः । प्रथमं तावदतीतानागतपदार्थः ज्ञानस्य विषयो न भवितुमर्हति । यतो हि मीमांसकमते ज्ञानस्य विषयः स एव भवति, यो ज्ञानोत्पन्नायाः ज्ञाततायाः आधारो भवेत्, वर्तमानज्ञाततायाः आधारः वर्तमानपदार्थ एव भवितुमर्हति । अतीतानागतपदार्थस्य अस्तित्वं वर्तमानकाले न भवति । तदा ज्ञानोत्पन्नज्ञातता तत्र कथं स्यात् । यदि ज्ञाततामाश्रित्य विषयनियमः स्यात्, तदा अतीतानागतपदार्थाः न विषयाः भविष्यन्ति । अतः विषयनियमः स्वाभाविको वर्तते, न तु ज्ञातताबलेन न भवति इति नैयायिकमतम् ।

पुनश्च ज्ञाततामाश्रित्य विषयनियमस्वीकारात् अनवस्थादोषो भवति । अनवस्थादोषस्याभिप्रायोऽस्ति यज् ज्ञातताया अपि ज्ञानं भवति, अतः ज्ञातता अपि तज्ज्ञानस्य विषयः । मीमांसकानां मते ज्ञातता ज्ञानस्य विषयस्तदैव भवति यदा तज्ज्ञानादुत्पन्नज्ञातता तत्र स्यात् । एवमेकज्ञाततायाः विषयोपपादनाय अपरज्ञातता अपेक्षते । अपरज्ञातता अपि ज्ञानस्य विषयो भवति । अतस्तृतीया ज्ञातता तत्र अपेक्षिता स्यात् । एवमनवस्थादोषः संभवति मीमांसापक्षे इति नैयायिकाः गदन्ति । अत एव नैयायिकमते विषयनियमः स्वाभाविको वर्तते ।

अत एव नैयायिकानां मते ज्ञानविषयातिरिक्ता ज्ञातता नैव स्वीकार्या भवति । ज्ञातता एव मीमांसकानां स्वतः प्रमाण्यस्य मूलं वर्तते । ज्ञाततामाश्रित्यैव ज्ञाततान्यथानुपपत्तिप्रसूतया अर्थापत्त्या ज्ञानस्य तत्प्रामाण्यस्य च ग्रहणं स्वीकुर्वन्ति मीमांसकाः । किन्तु "छिन्ने मूले नैव पत्रं न शाखा" इति उक्त्वा ज्ञातताखण्डनं कृत्वा नैयायिकाः स्वतःप्रामाण्यवादस्य खण्डनं कुर्वन्ति । एवं च यथा यथार्थज्ञानाज् ज्ञातता उत्पद्यते, तथैव अयथार्थज्ञानादपि । अत एव यदि यथार्थज्ञानात् समुत्पन्नायाः ज्ञातताया बलेन ज्ञानस्य तत्प्रामाण्यस्य च सिद्धिः भवति, तर्हि अयथार्थज्ञानात् समुत्पन्नाया ज्ञाततायाः बलेन ज्ञानस्य अप्रामाण्यस्य च ग्रहणं भवेत् । अतस्तदा अप्रामाण्यमपि स्वतः भवेत् तेषां पक्षे । अत एव यदि प्रामाण्यं स्वतस्तर्हि अप्रामाण्यमपि स्वतः स्वीकर्तव्यम् । अथवा उभयं परतः स्वीकर्तव्यं मीमांसकैः । परन्तु मीमांसकास्तथा न स्वीकुर्वन्ति । ते प्रामाण्यं स्वतः एवमप्रामाण्यं करणदोषजन्यात्वात् परतः स्वीकुर्वन्ति ।

**न्यायदृष्ट्या परतः प्रामाण्योपपादनम्**

न्यायस्य परतः प्रामाण्ये ज्ञानस्य तस्य प्रामाण्यस्य च ग्राहकसामग्री भिन्नरूपेण वर्तते । ज्ञानग्राहकसामग्री अनुव्यवसायो भवति, एवं प्रामाण्यस्य अप्रामाण्यस्य च ग्राहकसामग्री प्रवृत्तिसाफल्यमूलकं वैफल्यमूलकं वा अनुमानं भवति । पूर्वं प्रमाणेन घटपटादीनामर्थः ज्ञायते, तदा तद्ग्रहणार्थं तत्र प्रवृत्तिः भवति । प्रवृत्तौ सत्यां यदि सा सफला भवेत्, तदा तत्र अर्थोपलब्धिः भवति । तदा तज्ज्ञानं यथार्थं भवति । यदि प्रवृत्तिः विफला स्यात्, तदा ज्ञानमयथार्थं भ्रमो वा भवेत् । अतः प्रवृत्तिसाफल्याद् वैफल्याद्वा प्रामाण्यस्य अप्रामाण्यस्य च निर्णयो भवति । एतादृशस्थले यत्र ज्ञानानन्तरं तत्र प्रवृत्तिः जायते, एवं तदनन्तरं ज्ञानस्य प्रामाण्यमप्रामाण्यं वा निश्चीयते । सा दश अभ्यासदशापन्ना भवति । अभ्यासदशापन्नज्ञानस्य प्रामाण्यस्य अप्रामाण्यस्य च निश्चयः प्रवृत्तिसाफल्यमूलकानुमानेन वैफल्यमूलकानुमानेन भवति । यथा इदं मे जलज्ञानं प्रमाणं समर्थप्रवृत्तिजनकत्वात् । अतः अभ्यासदशापन्नज्ञानस्य प्रामाण्यं प्रवृत्तिसाफल्यमूलकादनुमानाद् भवति ।

केषुचित्स्थलेषु ज्ञानानन्तरं प्रवृत्तेः पूर्वमेव तस्य प्रमाण्यं गृह्यते । एतादृशं ज्ञानमनभ्यासदशापन्नज्ञानं भवति । तत्र समर्थप्रवृत्तिजनकत्वादित्यस्य स्थाने समर्थप्रवृत्तिजनकज्ञानजातीयत्वाद् इति हेतुः समुचितः भवति । अस्य अभ्यासदशापन्नज्ञानस्योल्लेखो जैनैः बौद्धैश्च स्वतः प्रामाण्यवादप्रसङ्गे कृतः ।

न्यायमते प्रामाण्यस्य अप्रामाण्यस्य च ग्रहणं प्रवृत्तिसाफल्यमूलकानुमानेन वैफल्यमूलकानुमानेन वा भवति; परन्तु ज्ञानस्य ग्रहणं अनुव्यवसायेन भवति । अयं घट इति ज्ञानं घटाज्जायते । अतो ज्ञानस्य

विषयो घटो वर्तते । इदं व्यवसायात्मकं ज्ञानं वर्तते । तदनन्तरं घटाज्ञानवानहं अथवा घटमहं जानामि इति एवं ज्ञानं जायते । अस्य द्वितीयज्ञानस्य विषयः घटो नास्ति, अपि तु घटज्ञानं वर्तते । एतज् ज्ञानविषयकं ज्ञानमनुव्यवसायो वर्तते । अस्माद् अनुव्यवसायाज् ज्ञानस्य ग्रहणं भवति ।

मीमांसकस्य ज्ञाततायाः उत्पत्तिः अयं घट इति ज्ञानात् भवति । नैयायिकानामनुव्यवसायस्य उत्पत्तिरपि अयं घट इति ज्ञानाद् भवति । परन्तु तत्र भेदोऽस्ति यन्मीमांसकस्य ज्ञातता घटगतधर्मः वर्तते, नैयायिकानान्तु अनुव्यवसायः घटे न तिष्ठति, अपि तु आत्मधर्मः वर्तते, यतो हि ज्ञानमात्मनो धर्म एव ।

प्रामाण्यवादमधिकृत्य नव्यन्यायग्रन्थेषु मथुरानाथ-रघुदेव-भट्टाचार्य-जानकीनाथ-गदाधरभट्टाचार्या-दीनां विस्तरेण विचारो दृश्यते । वस्तुतो दार्शनिकप्रस्थानेषु प्रामाण्यवादोऽतीवप्रौढ़ः शास्त्रचर्चाविषयो वर्तते । अत्र परस्परं खण्डनमण्डनचिन्तनपरम्परापि यत्र तत्र दृग्गोचरीभवति । प्रमाणद्वारा जलादिज्ञाने जाते तस्य प्रामाण्यमवधार्य कश्चिज्जलादौ प्रवर्तते । कश्चित्संदेहादेव प्रवृत्तः प्रवृत्त्युत्तरकाले जलादिप्रतिलम्भे सति प्रामाण्यमवधारयति इति वस्तुगतिरिति दिक् ।



# न्यायदर्शने शरीरविमर्शः

**डॉ. पीयूषकान्तदीक्षितः**

न्यायदर्शने षोडशधाविभक्तेषु पदार्थेषु द्वितीयः पदार्थः प्रमेयः प्रसिद्धः । यद्यपि प्रमाया विषयः अयं सर्वोऽपि संसारः प्रमेय एव, तथापि विशिष्टानां प्रमेयाणां द्वादशविधत्वं न्यायसूत्रकारेण महर्षिणा गौतमेनाभ्युपगतम् । "आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयम्" (न्या. सू. 1/1/9) इंत्येवं न्यायसूत्रे परिगणितानां प्रमेयाणां तत्त्वज्ञः अपवर्गमवाप्नोति । यदि चैतेषां प्रमेयाणां मिथ्याज्ञानं जायते, तर्हीदं मिथ्याज्ञानमेव संसारकारणं भवति । कीटसंख्यादीनां ज्ञानमपि प्रमेयज्ञानत्वेन स्वीकर्त्तुं शक्यते, परमेवं विधानां ज्ञानानां निःश्रेयसोपयोगित्वं न कथमपि साधयितुं शक्यते । एतावता निःश्रेयसोपयोगिनामेव[1] प्रमेयाणां द्वादशधा विभागः सूत्रकारेणानुष्ठित इति तथ्यं स्थैर्यमादधाति ।

द्वितीयं प्रमेयं शरीरम्, चेष्टायाः, इन्द्रियाणाम् अर्थानाञ्चाधिकरणम्[2] । इष्टप्राप्तये अनिष्ट-परिहाराय च या क्रिया[3] सा चेष्टापदव्यपदेश्या । सुखदुःखान्यतरसाक्षात्कारात्मकस्य भोगस्य साधनानीन्द्रियाणि घ्राणरसनचक्षुस्त्वक्श्रोत्राणि, क्रमशः पृथिव्यापस्तेजोवाय्वाकाशेभ्यः उत्पन्नानीति न्यायसिद्धान्तः । एतेषाम् इन्द्रियाणां विभिन्नानि पञ्च अधिष्ठानानि सन्ति । घ्राणेन्द्रियं तावत् नासाग्राधिष्ठितम् । रसनेन्द्रियाधिष्ठानं किल जिह्वाग्रम् । चक्षुरिन्द्रियं कृष्णताराग्रवर्त्तीति प्रसिद्धम् । त्वगिन्द्रियं सर्वमपि शरीरमभिव्याप्य तिष्ठति । एवं कर्णकुहराधिष्ठितम् अस्माकं श्रोत्रेन्द्रियं स्वीक्रियते । फलतः इन्द्रियाश्रयत्वमपि शरीरस्य सुस्फीतमिति आपाततः प्रतिभाति ।

परमत्रेदं विचारणीयम्–शरीरे इन्द्रियाणामाश्रयत्वं केन सम्बन्धेन विवक्षितम् । समवयन्ति (समवायसम्बन्धेन स्थितानि) इन्द्रियाणि शरीरे इति तु दुराशामात्रम् । अवयवी स्वावयवे समवायेन स्वीक्रियते, सावयवद्रव्याणि इन्द्रियाण्यपि समवायसम्बन्धेन स्वावयवेषु एव स्थास्यन्ति । घ्राणेन्द्रियं रसनेन्द्रियं चक्षुरिन्द्रियं त्वगिन्द्रियञ्च सावयवानि (अनित्यानि) इन्द्रियाणि । श्रोत्रमनसी तावत् निरवयवे (नित्ये) अतः अनयोः इन्द्रिययोस्तु समवायेनावस्थानं ब्रह्मणापि नोपपादयितुं शक्यम् । एवं समवाय सम्बन्धेन इन्द्रियाणि न शरीराश्रितानि प्रत्युत शरीरावयवाश्रितानीति[4] स्पष्टम् ।

संयोगेन इन्द्रियाश्रयत्वं शरीरलक्षणमिति प्रतिपादनमपि न परीक्षाकोटिमाटीकते, शरीरभिन्नानां घटादिपदार्थानामपि संयोगसंसर्गेण इन्द्रियाश्रयत्वस्य निराकुलत्वेन घटादौ इन्द्रियलक्षणातिव्याप्तेः वज्रलेपायमानत्वात् । फलतः शरीरेन्द्रिययोः परस्परमत्र आधाराधेयभावः नाभिमतः । यतः शरीरस्यानुग्रहेण अनुगृह्यन्ते शरीरोपघाते च उपहन्यन्ते इन्द्रियाणि, अतः शरीरस्य इन्द्रियाश्रयत्वम् अभ्युपगम्यते ।

पञ्चेन्द्रियाणाम् अधिष्ठानान्यपि पञ्च प्रसिद्धानि । यद्यपि एतेषाम् अधिष्ठानानाम् उपघाते इन्द्रियाणाम् उपघातः, अनुग्रहे चानुग्रहः अनुभूयते । एवमेतेषामधिष्ठानानामपि इन्द्रियाश्रयत्वेन शरीर-लक्षणाक्रान्ततया शरीरत्वमिति नास्थेयम्, यदुपघाते समेषामिद्रियाणामुपघातः अनुग्रहे चानुग्रहः तदेवेन्द्रियाश्रयं शरीरमिति तात्पर्यात् । गोलकादीनाम् इन्द्रियाधिष्ठानानां प्रत्येकं विनाशे सति अनुग्रहे वा सति, मात्रं चक्षुरिन्द्रियस्योपघातः अनुग्रहः वा अनुभवसिद्धः त्वगादीनामपि विनाशः अनुग्रहो वा भवतीति न केनाप्यनुभूयते । शरीरस्य तावद् जरावशादुपघाते सर्वाण्येव इन्द्रियाणि विकलायन्ते, युव-शरीरेण अनुगृहीतानि खलु इन्द्रियाणि सर्वाण्येव पटूनि सम्पद्यन्ते । एवञ्च इन्द्रियाधिष्ठानानां न इन्द्रियाश्रयत्वं, शरीरस्यैव इन्द्रियाश्रयत्वमिति तथ्यं सुस्थिरं भवति ।

एवमेव अर्थानामाश्रयत्वमपि शरीरस्य अवगन्तव्यम् । पृथिव्यादीनां पञ्चभूतानां यथाक्रमं गन्ध-रसरूपस्पर्श-शब्दाः विशेषगुणाः । इमे विशेष गुणा एव क्रमानुसारं घ्राण-रसन-चक्षुस्त्वक्-श्रोत्राणामर्थाः विषयाः वा बोध्याः । इमे सर्वेऽपि गन्धाद्याः अर्थाः सम्भूय न शरीरवृत्तयः पार्थिव-जलीयादिशरीरेषु गन्धादीनां केषांञ्चन अर्थानामेव समवेतत्वात् । एवञ्च समवायसम्बन्धेन अर्थाश्रयत्वं शरीरलक्षणं नाभिप्रेतम् । यतः सुखदुःखाद्युपलब्धिकारणत्वरूपं प्रयोजनं गन्धाद्यर्थानाम् असति शरीरे असम्भवदुक्तिकम्, अतः शरीराणाम् अर्थाश्रयत्वमूरीक्रियते इति अवधेयम् । अन्ते, "यदवच्छिन्ने आत्मनि अर्थाः भोगं जनयन्ति, तच्छरीरम्" इत्येवं लक्षणार्थः पर्यवसेयः ।

केचन तार्किकाः, चेष्टाश्रयत्वस्य, इन्द्रियाश्रयत्वस्य अर्थाश्रयत्वस्य च प्रातिस्विकरूपेण शरीर-लक्षणत्वं नामनन्ति । चेष्टायाः सामान्यतया व्यापारार्थकत्वस्वीकारे चेष्टाश्रयत्वं शरीरलक्षणं घटे अतिव्याप्नोति, अतः समवायेन चेष्टाश्रयत्वे सति संयोगेन इन्द्रियाश्रयत्वं शरीरलक्षणमभ्युपेयम्, परम् इन्द्रियाणां प्राप्यकारित्वेन इन्द्रियसंयोगित्वस्यापि घटे अक्षतत्वात् पुनः अतिव्याप्तिः ; एतत्परिजिहीर्षया लक्षणे समवायेन अर्थाश्रयत्वनिवेशः अपि व्यर्थः घटे एव रूपाद्यर्थानामपि समवेतत्वात् । घटे अतिव्याप्तिं वारयितुं इन्द्रियाश्रयत्वं समवायेनाभ्युपगम्यते चेत् इन्द्रियसमवायिकारणेषु परमाणुषु एव समवायेन इन्द्रियाश्रयत्वस्य प्रसिद्धेः शरीरे अव्याप्तिः प्रसज्यत एव । किञ्च इन्द्रियसमवायिकारणेषु परमाणुषु समवायेन चेष्टेन्द्रियार्थाश्रयत्वस्य सत्त्वात् परमाणूनां शरीरत्वप्रसक्तिभियाऽपि नेदं शरीरलक्षणं सम्भवि । घ्राणेन्द्रियस्य निर्माणं केवलं पृथिव्या एव भवति । रसनेन्द्रियनिर्मितिस्तावत् जलेनैव स्वीक्रियते । चक्षुषः निर्माणं तेजसा जायते । स्पर्शेन्द्रियस्योत्पत्तिस्तु वायुनाङ्गीक्रियते । आकाशस्यैव कर्णकुहरावच्छिन्नस्य श्रोत्रेन्द्रियत्वमुरीक्रियते । एतावता प्रतीन्द्रियम् एकैकस्यैव भूतस्य कारणत्वं प्रसिद्ध्यति ।

न्यायदर्शने शरीरं चतुर्धा विभज्यते । पृथिव्या निर्मितं शरीरं पार्थिवम् । जलेनोत्पन्नं शरीरं जलीयम् । तेजसा विनिर्मितं खलु शरीरं तैजसम् । वायुना उत्पद्यमानं शरीरं वायवीयम् ।

अस्माकं मानवशरीरं पार्थिवम् । जलीयं शरीरं वरुणलोके प्रसिद्धम् । तैजसं शरीरं तावत् सूर्यलोके अभ्युपगम्यते । वायवीयं शरीरं वायुलोके विद्यते । भूतपिशाचादीनां शरीरं वायुविनिर्मितं स्वीक्रियते ।

पार्थिवं शरीरं रजोवीर्यसंयोगेनं जायमानं योनिजं[5] मनुष्यपशुमृगादीनां प्रथितम् । योनिजं शरीरमपि द्विविधम्, जरायुजम्, अण्डजं च । चर्मनिर्मितगर्भावरणमेव जारायुपदेनोच्यते[6] । जरायुजं शरीरं मनुष्यपश्वादीनामास्ते । अण्डजं किल पार्थिवं शरीरं पक्षिसरीसृपादीनां स्वीक्रियते ।

कानिचन पार्थिवशरीराणि अयोनिजानि । एतेषामुत्पत्तिस्तावत् रजोवीर्यसंयोगमन्तरैवाभ्युपेयते । अयोनिजशरीराणामपि स्वेदजोद्भिज्जादिभेदेन बहुधा भेदः उपलभ्यते । जन्तुविशेषाणां पार्थिवं शरीरं स्वेदजमिति लोके अतिरोहितमेव । वृक्षलतादीनां[7] पार्थिवशरीराणाम् उद्भिज्जत्वमपि सर्वापरोक्षमेव । जलीयतैजसवायवीयशरीराणां तु अयोनिजत्वमेव प्रसिद्धम् ।

यद्यपि चतुर्णां ज्ञानेन्द्रियाणां निर्माणं पृथिव्यादिना एकैकेनैव भूतेनाङ्गीक्रियते, परं पार्थिवादि-शरीराणामुत्पत्तिस्तु पञ्चानामपि भूतानां[8] साहाय्येनैवाभ्युपगतास्ति । यदि मानवादीनां पार्थिवं शरीरं केवलं पृथिव्या एव नोत्पन्नं तर्हि मानवशरीरस्य जलीयत्वादिव्यवहारोऽपि कथं न विधीयते ? इति प्रश्नः अनायासं मनसि अवतरति । प्रश्नोऽयं, घटादीनां पदार्थानां जलादिना निर्माणे सिद्धेऽपि पार्थिवभागस्य घटादिनिर्मितौ प्राधान्यात् लोके यथा जलीयत्वादिव्यवहारः न भवति, प्रत्युत पार्थिवत्वादिव्यवहार एव अनुभवसिद्धः, तथा मानवशरीरेऽपि पार्थिवत्वव्यवहारमुपपाद्य समाधेयः । घटनिर्माणार्थं सन्नद्धः कुम्भकारः जलादीनां पदार्थानां सहयोगेनैव घटनिर्माणे साफल्यमवाप्नोति जलसंसिक्तमृत्तिकयैव घटनिर्माणसम्भवात् । एवं मानवशरीरमिदं केवलं पार्थिवपरमाणुभिरेवोत्पन्नं, परमिदं मानवशरीरं तावत् पर्यन्तं जनिं न लभते, यावत् जलादिभूतानां पार्थिवेऽस्मिन् शरीरे संयोगो न भवेत् । फलतः मानवशरीरस्य समवायिकारणं पृथ्वी, निमित्तकारणत्वञ्चास्य जलादिभूतेषु विद्यत इति स्पष्टम् ।

मानवशरीरस्य जलीयत्वस्वीकारे तैजसत्ववायवीयत्वस्वीकारे वा मानवशरीरे निर्गन्धत्वापत्तिः[9] दुरुद्धरा स्यात् । पृथ्वीमतिरिच्य जलादिषु भूतेषु गन्धस्यासत्त्वात् । मानवशरीरे यतो गन्धः प्राप्यते, अतः अस्य पार्थिवत्वमेव स्वीकर्त्तव्यमित्यवधेयम् ।

केचन मनुष्यशरीरस्य पार्थिवत्ववत् जीलयत्वम्, तैजसत्वम्, वायवीयत्वम्, आकाशीयत्वञ्चापि अभ्युपगच्छन्ति । पञ्चभूतेभ्यः उत्पन्नत्वादेव चास्य पाञ्चभौतिकत्वमप्युपपादयन्ति । मानवशरीरे पृथ्वी-विशेषगुणस्य गन्धस्योपलब्धेः यथा पार्थिवत्वं सिद्ध्यति, तथैव शरीरेऽस्मिन् स्वेदस्य, उष्णतायाः, भुक्ताहाररससञ्चरणस्य, अवकाशदानरूपाकाशविशेषगुणस्य च विद्यमानत्वात्, जलीयत्वम्, तैजसत्वम्, वायवीयत्वम्, आकाशीयत्वमपि कथं न सिद्ध्यतीति विद्यते पूर्वपक्षमतावलम्बिनामाकूतम् । परमयं पूर्वपक्षः न कथमपि परीक्षाकोटिमाटीकते । जलादिविशेषगुणानां स्वेदादीनामुपलम्भस्तावत् मानवशरीरे जलादिपरमाणूनामेतच्छरीरं प्रति समवायिकारणत्वमस्वीकृत्य केवलं जलादिभूतसंयोगादपि सूपपादयितुं शक्यते । स्थाल्यां तण्डुलपाकावसरे तण्डुलेषु अग्निसंयोगेन उष्णतायाः, जलसंसर्गेण तण्डुलेषु क्लिन्नतायाः वायुसम्पर्केण तण्डुलेषु सञ्चरणस्य, आकाशधर्मस्यावकाशस्य च आकाशसम्बन्धेन पार्थिवेऽपि तण्डुले यथा उपस्थितिः लोकेऽनुभूयते, तथैव मानवशरीरेऽपि क्लेदादीनां जलादिसंयोग-मात्रेणैवानुभव इति मन्तव्यम् ।

मानवशरीरस्य समवायिकारणं पार्थिवपरमाणुवद् यदि जलीयः अपि परमाणुः स्यात्, तर्हि शरीरस्यास्य गन्धवत्त्वमप्यनुपपद्येत । कारणगुणेभ्य एव कार्यगुणानामुत्पत्तेः[10] न्यायसिद्धान्त-सम्मतत्वेन मानवशरीरकारणयोः पार्थिवजलीयपरमाण्वोः गन्धस्यासत्त्वात् । किञ्च समानजातीयेभ्यः परमाणुभ्य एव द्व्यणुकादीनामुत्पत्तिः स्वीक्रियते, अतो विभिन्नजातीयेभ्यः पार्थिवजलीयादिपरमाणुभ्यः मानवशरीरनिर्माणम् असम्भवग्रस्तमेवेति निर्धारणीयम् ।

मानवशरीरस्य पार्थिवत्वसाधकानि बहूनि वेदवचनान्यपि सुप्रसिद्धानि सन्ति ।

"सूर्यं ते चक्षुर्गच्छतात्"[11], "पृथ्वीं ते शरीरम्" इति वेदवचनं प्राप्यते । प्रथमवाक्ये चक्षुरिन्द्रियस्य नाशः लयो वा सूर्ये भवतु इति प्रतिपाद्यते । द्वितीयं श्रुतिवचनं पृथिव्यां शरीरं तव विलीयेत इति आशयं प्रकाशयति । आभ्यां वचनाभ्यां चक्षुरिन्द्रियस्य समवायिकारणं तेजोद्रव्यम्, मानवशरीरस्य च समवायिकारणं पृथ्वी इति व्यवस्थितं भवति । न्यायदर्शने यत्राधिकरणे समवायेन किमपि कार्यं जन्यते, तत्रैवाधिकरणे अथवा समवायिकारणे तस्य कार्यस्य लयः अपि अभ्युपगम्यते । एतावता समवायि-कारणस्यैव ध्वंसाधिकरणत्वात् उपर्युक्तैः वेदवाक्यैः पृथिव्याः तेजोद्रव्यस्य च यथाक्रमं मनुष्यशरीर-समवायिकारणत्वसाधनं चक्षुरिन्द्रियसमवायिकारणत्वसाधनं वा सर्वथा युक्तियुक्तमेव ।

एवं 'सूर्यं ते चक्षुः स्पृणोमि[12]' 'पृथिवीं ते शरीरं स्पृणोमि' इत्यत्र गर्भाधानमन्त्रेषु अपि मानव-शरीररचना पृथिव्या एव भवतीति सुदृढं प्रतिपाद्यते । विवेचनेनानेन शरीरस्य समवायिकारणं पृथ्वी एव, जलादीनां भूतानां तु शरीरस्यास्य निर्मितौ निमित्तकारणत्वमिति तथ्यं सुनिश्चीयते ।

यदवच्छिन्ने आत्मनि भोगः, तदन्त्यावयवि[13] शरीरमिति सिद्धान्तः । 'पादयोः मे सुखम्', 'शिरसि मम वेदना' इत्यादि प्रतीत्याधारेण पादावच्छिन्ने, शिरोभागावच्छिन्ने चात्मनि सुखदुःखान्यतर-साक्षात्कारात्मकः भोगः नूनं भवति, परं पादयोः शिरसश्च अन्त्यावयवित्वाभावात् न शरीरत्वव्यवहारः इत्यवधेयम् । मृतशरीरस्यापि शरीरत्वं तावत् निराबाधं, परं मृतेऽस्मिन् अन्त्यावयवि-शरीरे भोगस्य अवच्छेदकतासम्बन्धेनासम्भवात् शरीरलक्षणमव्याप्तमिति तु नाशङ्कनीयम्; आत्मविशेषगुणकारण-मनःसंयोगवदन्त्यावयविमात्र-वृत्तिजातिमत्वमिति शरीरलक्षणस्वीकारात् । सुखादीनाम् आत्मविशेष-गुणानां कारणं मनःसंयोगः शरीरे एव भवति, फलतः अवच्छेदकतासम्बन्धेन मनःसंयोगवत् अन्त्यावय-विशरीरम्, अन्त्यावयविशरीरमात्रवृत्तिजातेः मनुष्यत्वादीनां मृतशरीरेऽपि अक्षततया लक्षणं सर्वत्र लक्ष्ये सङ्गच्छत एवेति स्पष्टम् । पाञ्चभौतिकत्वेन पराभिमतं मानवशरीरमिदं पार्थिवमेवेति प्रत्यपादि । द्व्यणुकादिप्रक्रमेणैवं समग्रापि सृष्टिः न्यायदर्शने अभ्युपेयते । मानवशरीरमपि द्व्यणुकादिक्रमेणैव पार्थिवपरमाणुभिः उत्पद्यते । शरीरनिर्माणानुगुणा क्रिया तावत् पृथ्वीपरमाणौ, जीवात्मनः धर्मा धर्मात्मकानाम् अदृष्टानामाधारेणैव ईश्वरेच्छया[14] भवति । नित्यज्ञानेच्छाकृतिमतः परमेश्वरस्यैव विद्यते एतादृशं निरतिशयं सामर्थ्यं, यन्माहात्म्येन सः निखिलजीवात्मनामदृष्टफलं (कर्मविपाकं) विज्ञाय, अदृष्टानुरूपज्ञानभोगायुषः चतुरोवर्णान् अन्यानि चोच्चावचानि भूतानि समुत्पाद्य, कर्मज्ञान-वासनानुरूपैः धर्मज्ञानवैराग्यैश्वर्यैः अधर्माज्ञानावैराग्यानैश्वर्यैः तत्फलैश्च सुखादिभिः सशरीरं जीवात्मानं संयुनक्ति ।

न्यायदर्शनं जीवात्मनः नित्यत्वम्, शरीरस्य च अनित्यत्वम् ऊरीकरोति । यथा लोके पुरुषः जीर्णानि वस्त्राणि परिवर्त्य नूतनानि उपादत्ते, तथैव अयमात्मा पूर्वजन्मगतानि शरीराणि परित्यज्य जन्मन्यस्मिन् अभिनवानि शरीराणि धारयति । जीवनेऽस्मिन् परिगृहीतं शरीरं पुराणं सत् पुनः जीवात्मना परिवर्त्यते इत्येवं भगवान् श्रीकृष्णोऽपि गीतायामुपदिशति[15] ।

पूर्वजन्मनि शरीरेण, वाचा, मनसा च सम्पन्नः व्यापार एव पूर्वजन्मार्जितं कर्म इति उच्यते । अस्य कर्मण एव प्रवृत्तिशब्देनापि[16] व्यवहारो न्यायदर्शने प्रसिद्धः । शरीरे जायमानेयं प्रवृत्तिः (व्यापारः) पापात्मिका पुण्यात्मिका च सम्भाव्यते । यद्यपि शरीरादिजन्येयं प्रवृत्तिः पापपुण्यात्मकस्य अदृष्टस्य जनिका, तथापि 'पापात्मिका प्रवृत्तिः, पुण्यात्मिका प्रवृत्तिः' इत्येवं प्रतिथो लौकिकव्यवहारस्तु प्राणस्य साधने अन्ने "अन्नं वै प्राणिनः प्राणाः" इति प्रामाणिकव्यवहारवत् समुपपादनीयः । शरीरेणोत्पन्ना पापात्मिका प्रवृत्तिः हिंसा-स्तेय-निषिद्धमैथुनाद्याचरणभेदेन त्रिधा विभज्यते । वाचा सञ्जायमाना पापात्मिका प्रवृत्तिस्तावत् अनृतपरुषसूचनाऽसम्बद्धवाग्व्यवहाररूपेण चतुर्विधा । पाप-कारणा मानसिकी प्रवृत्तिस्तावत् परद्रोह-परद्रव्याभीप्सा-नास्तिक्यधीभेदेन त्रिप्रकारा । एवं पूर्वजन्मनि शरीरेण वाचा मनसा च जायमाना पापजनिका प्रवृत्तिः दशविधेति स्फीतमेव । शरीरे जायमानायाः पुण्यजनिकायाः प्रवृत्तेः अपि दशविधत्वं[17] न्यायदर्शने व्यवस्थाप्यते । दानं, त्राणं, शुश्रूषा च शरीर-सम्बन्धिन्यः प्रवृत्तयः । वाण्या जायमाना पुण्योत्पादिका प्रवृत्तिः सत्यसम्भाषण-हितवचन-प्रियवचन-साङ्गवेदाध्ययनभेदेन चतुर्धा स्वीक्रियते । धर्मसाधिकाः मानसिक्यः प्रवृत्तयः दयास्पृहाश्रद्धा भेदेन त्रैविध्यमावहन्ति । वाग्बुद्धिशरीरारम्भलक्षणाभिः[18] एताभिः प्रवृत्तिभिः पूर्वस्मिन् जन्मनि यददृष्टं पापपुण्यात्मकं जन्यते, तत् समवायसम्बन्धेन जीवात्मनि अवतिष्ठते । आत्मसमवेतादृष्टप्रेरितैः भूतैरेव जन्मन्यस्मिन् जनिं लभते शरीरमिति न्यायशास्त्रविदामाकूतम् ।

न्यायदर्शनमिव वैशेषिकदर्शने अपि धर्माधर्मयोः आत्मगुणत्वम्[19] अभिप्रेतम् । धर्मसाधनानां कर्मणां ज्ञानं किल श्रुतिस्मृतिभ्यामेव जायते । समेषां वर्णानाम् आश्रमिणाञ्च धर्मसाधनेषु कर्मसु कानिचन कर्माणि सामान्यानि कानिचन च विशिष्टानि । देवमनुष्यादिलोकेषु पुनर्जन्मकामनया अनुष्ठितात् फलातिशयहेतोः प्रकृष्टाद् धर्मात् स्वल्पाधर्मसहितात् पूर्वजन्मकृतकर्मानुरूपैः अभीष्ट-शरीरेन्द्रियविषयसुखादिभिः जीवः सम्बद्ध्यते । पुनर्भवकामनया कृतात् प्रकृष्टाद् धर्मात् अधिगतेषु गन्धर्वादिशरीरेष्वपि मनाक् दुःखसम्पर्कः भवत्येव; अयं दुःखसम्पर्कस्तावत् स्वल्पाधर्मप्रभावादेवेति ध्येयम् । प्रकृष्टधर्मे तारतम्यानुरोधेन शरीरादिष्वपि तारतम्यमनुभूयते इति सिद्धान्तः । एवम् प्रकृष्टात् अधर्मात् प्रेतयोनीनां तिर्यग्योनीनां च स्थानेषु अनभीष्टैः शरीरेन्द्रियविषयदुःखादिभिः सम्बन्धोऽनु-मन्यते । प्रेतादिस्थानेऽपि स्वल्पं किञ्चित् सुखं किल स्वल्पधर्मप्रभावादेवानुभूयते ।

एतावता विवेचनेन न्यायवैशेषिकदर्शनयोः शरीरसर्गः जीवात्मसमवेतादृष्टनिमित्तक एवेति सुस्थिरं सञ्जायते । उदाहरणमुखेनापि तथ्यमिदम् आकलयितुं शक्यते, यथा रथमारुह्य पुरुषः (जीवात्मा) भ्रमन् काष्ठादिनिर्मितेन रथेन सुखदुःखान्यतरसाक्षात्कारात्मकं भोगं करोति; जीवात्मनः उपभोग-साधनस्य निर्जीवस्य रथस्य निर्माणं तावत् रथनिर्मातुः प्रयत्नेन (गुणविशेषेण) प्रेरितेभ्यः

काष्ठादिभूतपदार्थेभ्य एव अभ्युपगम्यते, कदाचिदपि चेतनस्य पुरुषस्य प्रयत्नमन्तरा काष्टादिमात्रेण रथनिर्मितिः अशक्या, तथैव जीवात्मनः सुखदुःखान्यतरसाक्षात्कारसाधनम् अचेतनमिदं शरीरमपि पूर्वजन्मनि जीवात्मना अनुष्ठितया शुभाशुभप्रवृत्त्या जनितेन आत्मविशेषगुणेन अदृष्टेनैव प्रवृत्तैः भूतैः पार्थिवादिपरमाणुभिः उत्पद्यते ।

एवं यत्र-यत्र आत्मनः उपभोगसाधकत्वम्, तत्र-तत्र आत्मविशेषगुणप्रयुक्तभूतजन्यत्वम् इति व्याप्तिबलेन पार्थिवादिशरीरे आत्मविशेषगुणरूपादृष्टप्रयुक्तभूतजन्यत्वम्, आत्मोपभोगसाधकत्वहेतुना साध्यत इति तात्पर्यमवसीयते ।

परलोकं धर्माधर्मरूपमदृष्टञ्च इन्द्रियातीतम् अस्वीकुर्वाणाः लोकायतिकाः आत्मसमवेतादृष्टप्रयुक्तेभ्यः भूतेभ्यः शरीरोत्पत्तिमसहमानाः स्वतन्त्रेभ्यः भूतेभ्य एवं तदुत्पत्तिमामनन्ति । यथा सिकताप्रस्तराञ्जनादीनां भौतिकानां पदार्थानां जीवात्मोपभोगसाधकत्वमास्ते, परं एतेषु पदार्थेषु आत्मविशेषगुण(अदृष्ट)प्रयुक्तभूतजन्यत्वम् असम्भवि, तथैव शरीरोत्पत्तिरपि अदृष्टनिरपेक्षेभ्यो भूतेभ्यः एव अभ्युपेयेति एतेषामाकूतम् । एवं चार्वाकाः पार्थिवशरीरे, उपभोगसाधकत्वहेतुना आत्मविशेषगुणप्रयुक्तभूतजन्यत्वाभावं सिषाधयिषन्ति । यत् यत् उपभोगसाधकं तत् तत् आत्मविशेषगुणप्रयुक्तभूतजन्यत्वाभाववदिति द्रढयितुं दृष्टान्ततया चार्वाकैः पाषाणसिकतादयः उपादीयन्ते । हेतौ साध्यनिरूपितायाः व्याप्तेः साक्षात्कारस्तावत् दृष्टान्ते वादिनः प्रतिवादिनश्च अत्यावश्यकः । प्रस्तुतस्थले दृष्टान्ततयोपन्यस्ते पाषाणसिकतादौ नैयायिकाः उपभोगसाधकत्वं तु स्वीकुर्वन्ति परमत्र आत्मविशेषगुणप्रयुक्तभूतजन्यत्वाभावं नाभ्युपगच्छन्ति, प्रत्युत तद्विपरीतम् आत्मविशेषगुण(अदृष्ट)प्रयुक्तभूतजन्यत्वमेव साधयितुं प्रस्तुतः दृष्टान्तः नोभयवादिसम्मतः । अतः दृष्टान्तेनानेन अदृष्टप्रयुक्तभूतजन्यत्वाभावसाधनप्रयासः चार्वाकाणां व्यर्थ एवेति ।

मानवशरीरोत्पत्तौ मातुः शोणितं पितुः वीर्यञ्च साक्षात् कारणं भवतः । रजोवीर्यसंयोगे सति सर्वदा शरीरोत्पत्तिः (अर्थात् गर्भाधानं नियमितं) लोके नानुभूयते, अतः रजोवीर्यसंयोगे शरीरोत्पत्तिं प्रति कारणता अन्वयव्यभिचारस्य जागरूकतया नाभ्युपगन्तव्येति कथनम् अज्ञानविजृम्भणमात्रम्; शरीरोत्पत्तौ गर्भाधाने वा रजोवीर्यसंयोगमतिरिच्य गर्भस्थशिशोः आत्मनः पूर्वजन्मानुष्ठितकर्मजनितम्[20] अदृष्टम्, पुत्रसुखोत्पादकं, मातापित्रोः कर्मजनितम् अदृष्टञ्चापि कारणमित्यभ्युपगमात् । एवञ्च यत्र सत्यपि रजोवीर्यसंयोगे शरीरोत्पत्तिः नानुभूयते, तत्र अदृष्टात्मकस्य कारणस्य विरहात् सामग्रीवैकल्येन शरीरं नोत्पद्यते इति अत्यन्तं स्पष्टम् । चार्वाकमतानुसारं तु पुत्रसुखजनकस्य मातापित्रोः पूर्वजन्मार्जितकर्मजनितस्य अदृष्टस्य शरीरोत्पादं प्रतिकारणत्वास्वीकारात् अदृष्टनिरपेक्षस्य भूतमात्रस्यैव च कारणत्वस्वीकारेण दम्पत्योः रजोवीर्यसंयोगमात्रेणैव गर्भाधाननियमः आपद्येत । यतो दम्पत्योः संयोगे सति गर्भाधाननियमः (शरीरोत्पत्तिनियमः) लोके नानुभूयते, अतः पूर्वजन्मार्जितकर्मजनितस्यादृष्टस्यापि शरीरोत्पादं प्रति कारणत्वं नूनमेवाभ्युपेयमिति युक्तमुत्पश्यामः ।

मानवशरीरनिष्पत्तिस्तावत् आहारमन्तराप्यसम्भवि, मात्राशितं पीतञ्च अन्नजलादिकमेवाहारः । मातुः आहारपरिपाकमहिम्ना मातृतनौ विशिष्टं किञ्चिद्[21] रसद्रव्यं जनिं लभते । गर्भाशयस्थं बीजं

सम्पोषयितुं पूर्वशरीररूपेण परिवर्धयितुञ्च अपेक्षितया मात्रया रसद्रव्यमिदं सङ्कलितं तिष्ठति । रसद्रव्येण पोषितं बीजं यादृशम् आकारम् एकरात्रेण आधत्ते, तस्य कललनाम्ना व्यवहारः शास्त्रेषु प्रसिद्धः । पञ्चरात्रेण परिष्कृतः गर्भाकारः बुद्बुदसंज्ञया व्यवह्रियते । दशदिवसैः परिपुष्टं बीजं कर्कन्धू इत्यभिधाम् आधत्ते । अनन्तरञ्च पेशी अण्डं वा विकासमायाति । मासे व्यतीते विकसितं बीजं शिरःसम्पन्नं जायते । मासद्वयेन बाह्वङ्घ्र्याद्यङ्गविग्रहैः समृद्धं गर्भशरीरम् अभ्युपगम्यते । गर्भशरीरे नखलोमास्थिचर्मणाभाविर्भावः लिङ्गच्छिद्रोद्भवश्च त्रिभिः मासैः अभ्युपेयते । मासचतुष्टयेन सप्तधातूनां प्रादुर्भावः मासपञ्चकेन क्षुत्तदुद्भवः अपि ऊरीक्रियते । अतिवाहिते च मासषट्के जरायुणा परिवेष्टितं[22] गर्भशरीरे अवतीर्णं प्रसवपर्यन्तं गर्भशरीरं पुष्णात्येव[23] ।

अत्यन्तं विचित्रमिदं गर्भशरीरनिर्माणं विचित्रकारणेनैव सम्भवदुक्तिकम्, विचित्रञ्च तत्कारणं पूर्वजन्मार्जितविचित्रकर्मजनितम् अदृष्टमेवेति सुनिश्चितम् । गर्भशरीरे वैचित्र्यमिदम् आहारादिभूत-वैचित्र्यप्रयुक्तमिति कथनं न क्षोदक्षमम्, आहारादिनिमित्ताविशेषेऽपि वैचित्र्यानुभवात् । फलतः शरीरोत्पत्तौ आहारादिकम् अदृष्टसापेक्षमेव कारणमिति अवसीयते । किं बहुना; गर्भाधानप्रयोजकः मातुः पितुश्च संयोगः[24] अपि अदृष्टनिमित्तक एव । एवं जीवात्मनः प्रतिशरीरं विभिन्नः संयोगः अपि अदृष्टमूलक एव । अन्यथा असङ्ख्येषु शरीरेषु सत्सु येन केनापि शरीरेण यस्य कस्यापि जीवात्मनः संयोगः भोग(सुखदुःखान्यतरसाक्षात्कार)जनकः स्यात् । किञ्च जीवात्मनां व्यापकत्वेन एकेनापि शरीरेण समेषां सम्बन्धात् अशेषजीवात्मनां सदृशः भोगः अपि एकेनैव शरीरेण आपद्येत । यतः जीवात्मनः प्रतिशरीरं नियतः संयोगः सिद्धः सर्वेषां जीवत्मनां च सदृशः भोगः ब्रह्मणाप्युप-पादयितुमशक्यः, अतः जीवात्मनः पूर्वजन्मार्जितकर्मजनितादृष्टाधारेण विनिर्मिते शरीरविशेषे एव नियतः संयोग इति तथ्यमाविष्क्रियते । एतावता अदृष्टसापेक्षैः पृथिव्यादिभूतैरेव शरीरं निष्पद्यते इति निर्गलति ।

तात्पर्यमिदम्–मानवानां शरीरमिदं विचित्रस्वभावकम् । अनन्तेषु मानवशरीरेषु कयोरपि द्वयोः शरीरयोः सर्वथा साम्यं लोको नानुभवति । अशेषस्यापि जीवात्मनः शरीरं जन्मप्रभृत्येव[25] वैशिष्ट्यमावहति । कस्यचित् जीवात्मनः जन्म प्रशस्ते कुले, कस्यचिच्चाप्रशस्ते कुले अवलोक्यते । उत्तमकुले कस्यचनोत्पत्तिः कस्यचन च निकृष्टकुले । जीवात्मसम्बद्धं शरीरं कस्यचन रुग्णं कस्यचन च प्रायः अरुग्णं दृश्यते । कस्यचन शरीरं तावत् सर्वावयवपरिपूर्णं कस्यचन च विकलमुत्पद्यते । कस्यचन आत्मनः शरीरं सुखसमृद्धं कस्यचन च दुःखपङ्कनिमग्नमनुभूयते । जीवात्मविशेषस्य शरीरं शुभलक्षण-सम्पन्नं जीवात्मविशेषस्य च अशुभलक्षणं जन्यते । एवमन्येऽपि बहवः अनुभवितुं योग्याः प्रतिशरीरं स्थूलाः भेदाः सन्ति । एषु शरीरेषु सूक्ष्मो भेदस्तु अपरिसङ्ख्येय एव । अयं विचित्रः जन्मभेदः प्रत्यात्मसमवेतपूर्वजन्मार्जितकर्मजनितादृष्टवैचित्र्यादेव सूपपद्यते । प्रत्यात्मनियतस्य विचित्रस्यादृष्टस्य शरीरोत्पत्तिनिमित्तत्वानभ्युपगमे शरीरोत्पत्तिनिमित्तानां पृथिव्यादिभूतानां वैचित्र्याभावात् शरीराणां प्रत्यात्मनैयत्यं वैचित्र्यञ्च नोपपद्येत[26] ।

जन्मवैचित्र्यमिव मरणवैचित्र्यमपि तथाविधकर्मजनितादृष्टवैचित्र्येणैवोपपाद्यते । बहूनां जीवात्मनां शरीरं गर्भदशायामेव विनश्यति । कस्यचित् प्रसवसमकालमेव मरणम्, कस्यचित् मासवर्षाद्यन्तरालेन, कस्यचिद् दीर्घदीर्घतरादिदुःखविपाकेन, कस्यचिच्च प्रशस्ताप्रशस्तनिमित्तेन मरणम् । एवं मरणवैचित्र्यं तु सर्वापरोक्षम् ।

सन्दर्भेऽस्मिन् एतदपि अवधेयम्—न्यायदर्शने निःश्रेयसस्य परापरभेदेन द्वैविध्यं निरूप्यते । तदत्यन्तविमोक्षलक्षणः अपवर्ग एव निःश्रेयसमिति निर्विवादम् प्रतिभाति, परमेतत् व्यामोह-विजृम्भितमेव । जीवन्मुक्तेरपि[27] निःश्रेयसत्वोपपादनात् जीवन्मुक्तिरेव अपरं निःश्रेयसम् । जीवन्मुक्तिरूपमिदमपरं निःश्रेयसं श्रुतिवाक्यजन्यतत्त्वज्ञानेन आन्वीक्षिक्यायत्तेन मननजन्येन वा तत्त्वज्ञानेन साक्षात् न भवति । आत्मनः मननान्तरं[28] तस्य सादरं नैरन्तर्येण निदिध्यासनं ध्यानं चिन्ता वा आवश्यिकी । आत्मनः चिरं चिन्तनेन अन्ते आत्मसाक्षात्कारः निष्पद्यते । परिनिष्पन्नात्म-साक्षात्कारस्य पुरुषस्य रागद्वेषादयो दोषाः अपयन्ति, अपगतदोषोऽयं पुरुषः पुनः धर्माधर्मसाधनयोः अप्रवर्त्तमानः, अनागतधर्माधर्मोत्पादधारां निरुणद्धि, अयमनागतधर्माधर्मयोरनुत्पाद एव अपरं निःश्रेयसम्, एतच्च तत्त्वसाक्षात्कारानन्तरमेव[29] जनिं लभते । एवम् अनागतधर्माधर्मयोरनुत्पादात्मकेन अपरनिःश्रेयसेन सम्पन्नः भूतेन्द्रियविजयी प्रज्ञाज्योतिः जीवन्नेव मुक्त इत्यभिधीयते । एतादृशः कश्चन तत्त्वज्ञः मुनिः एव शास्त्रस्य प्रवर्त्तकः अभीष्टः । तत्त्वज्ञोऽयं जीवन्मुक्तः, सशरीरः तावदवतिष्ठते, यावत् अभुक्तस्य पूर्वजन्मार्जितकर्मजनितादृष्टप्रचयस्य भुज्यमानस्य च शरीरेणोपभोगपुरस्सरं प्रक्षयो न सञ्जायते । पूर्वजन्मार्जितकर्मजनितादृष्टस्य यथा शरीरोत्पत्तौ निमित्तत्वमुपपादितम्, तथा वर्त्तमान-शरीरस्थितिनिमित्तत्वमपि धर्माधर्मसमाख्यातस्य अस्य अदृष्टस्यैव प्रत्येतव्यम् । "यावदात्मनि धर्माधर्मौ तावदायुः[30] शरीरमिन्द्रियाणि विषयाश्चेति" वृद्धवचनमपि तथ्यमेतत् पुष्णाति । फलतः जीवन्मुक्तस्य शरीरं धर्माधर्मयोः उपभोगेन क्षीणं सत्, निरायतने जीवन्मुक्तात्मनि, तत्त्वज्ञानादिक्रमेणैवाधिगन्तुं योग्यं दुःखाभावरूपं परं निःश्रेयसम् उत्पादयतीति ।

विवेचनेनानेन अनागतधर्माधर्मयोरनुत्पादात्मकमपरं निःश्रेयसं किल तत्त्वसाक्षात्कारसमनन्तर-मेवासाद्यते, परं तावत् निःश्रेयसं, भुज्यमानस्य अभुक्तस्य च प्रागुपात्तस्य अदृष्टप्रचयस्य भोगेन प्रक्षये[31] सति बहुकालानन्तरं शरीरेन्द्रियादिक्षयात्मकजन्माभावादेव कश्चन कदाचित् प्राप्नोतीति स्फीतम् । एवं शरीरोत्पत्तेः पूर्वजन्मार्जितकर्मजनितादृष्टं सापेक्षत्वानभ्युपगमे शरीरेण जीवात्मनः वियोगः[32] अपि नोपपद्येत, शरीरोत्पत्तेः अदृष्टसापेक्षत्वस्वीकारे तु अदृष्टनाशात् शरीरजीवात्मनोः वियोगः सूपपन्नः, इत्यपि अवदातम् ।

तत्त्वसाक्षात्कारवतः जीवन्मुक्तात्मनः अपि कस्यचन सत्वरं कस्यचन च विलम्बेन कथं परं निःश्रेयसमिति तु नाशङ्कनीयम्, परनिःश्रेयसार्थं त्वरमाणेन जीवन्मुक्तात्मना अचिन्त्यसमाधिप्रभावयुतेन युगपदनेकविधदेहान् समुत्पाद्य अनियतविपाककालानां दीर्घकालफलानामपि अदृष्टानां युगपदुपभोगात्, अचिरं निःश्रेयसप्राप्तेः परनिःश्रेयसार्थं त्वरारहितेन च जीवन्मुक्तात्मना क्रमशः यथाकालं विभिन्नेषु शरीरेषु अदृष्टानामुपभोगात्, चिरं निःश्रेयसप्राप्तेश्च निराकुलत्वात् ।

तत्त्वसाक्षात्कारवतः जीवन्मुक्तात्मनः मिथ्याज्ञानवासनानाशे[33] सति मिथ्याज्ञानकार्याणां दोषाणाम्, दोषकार्याणां धर्मधर्मात्मिकानां प्रवृत्तीनाञ्च क्षयः अनायासमेव सिद्धः, कारणनाशेन अनायासं कार्यनाशात् । नहि कफप्रभवं ज्वरं शमयितुं कफनिवृत्तौ[34] जातायां लोकः प्रयत्नान्तरमातिष्ठते, कफनिवृत्त्यैव ज्वरापगमात् । फलतः तत्त्वसाक्षात्कारानन्तरं मिथ्याज्ञानवासनानाशे जाते अपरनिः-श्रेयसार्थं प्रयत्नः नास्थेयः, परं परनिःश्रेयसाधिगतये तु भोगार्थं कायव्यूहनिर्माणाद्यर्थमवश्यं प्रयत्नः आस्थेय[35] इति तत्त्वं निर्गलति ।

निःश्रेयसस्यास्य परापरभेदेन द्वैविध्यव्यवस्थापनादेव "प्रमाण-प्रमेय-संशय-प्रयोजन-दृष्टान्त-सिद्धान्तावयव-तर्कनिर्णयवाद-जल्प-वितण्डा-हेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधि-गमः", "दुःख-जन्म-प्रवृत्ति-दोष-मिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः" इत्यनयोः गौतम-सूत्रयोः प्रामाण्यमपि निस्सन्दिग्धं व्यवस्थाप्यते । अन्यथा दुःखात्यन्तविमोक्षरूपस्यैव निःश्रेयसस्याभ्युपगमे, प्रथमसूत्रानुसारं प्रमाणादीनां तत्त्वज्ञानानन्तरमेवापवर्गस्वीकारे च कश्चनापि तत्त्वज्ञ इह जगतीतले स्थितिं नैवासादयेत् । फलतः शास्त्रप्रणेतृषु तत्त्वज्ञत्वमेव व्याहन्येत, वातपुत्रीयत्वञ्च शास्त्राणां प्रसज्येत । यदि तावदिमामापत्तिमपाकर्त्तुं सशरीरस्य तत्त्वज्ञस्याप्यवस्थानं[36] समर्थ्यते, तर्हि वृश्चिकभिया पलायमानस्य आशीविषमुखे पतनमात्रमेतत्, प्रमाणादि-तत्त्वज्ञानान्निःश्रेयसमिति गौतमाभिमतस्य मिथ्यात्वापातात् । एतेन शरीरोत्पत्तेः पूर्वजन्मार्जितकर्मजनितादृष्टसापेक्षत्वास्वीकारे, अदृष्टनाशापेक्षस्य शरीरनाशस्यासम्भवदुक्तिकतया परनिःश्रेयसानुपपत्तिः ब्रह्मणाप्यपनेतुमशक्येति भूतसापेक्षायाः शरीरोत्पत्तेः अदृष्टसापेक्षत्वमपि सुनिश्चीयते ।

जगद्रचनायां यदि अदृष्टस्य कारणत्वं स्वीक्रियते, तर्हि ईश्वरस्य जगत्कारणत्वमनुपपन्नमिति तु दुराशामात्रम्, जगति जन्मादिवैचित्र्यमुपपादयितुं विचित्रस्यादृष्टस्य, बुद्धिमत्-पूर्वकत्वञ्चात्रसम्पादयितुं नित्यज्ञानेच्छाकृतिमतः ईश्वरस्य, अवश्यमेव जगत् कारणत्वाभ्युपगमात् । बुद्धिमत्कृतैः कर्मभिः जनितेनादृष्टेन विचित्रेण, स्थावरादिकार्याणां जननात् बुद्धिमत्पूर्वकत्वं संसारस्य ईश्वरमन्तरापि सम्भाव्यते इति तु न रमणीयम्, बुद्धिमता साक्षात्कृतं[37] बुद्धिमत्पूर्वकमिति विवक्षणात् । बुद्धि-मदनुष्ठितकर्मजनितमदृष्टं तत्सामर्थ्यादिकञ्च यावद् ईश्वरो न साक्षात्करोति तावद् न किमपि कार्यं स्थितिं लभते । बुद्धिमता विरचितः रथः बुद्धिमदधिष्ठातृनिरपेक्षः स्वकार्यं कर्त्तुमक्षमः इति न कस्यापि तिरोहितम् । किञ्च यथा दण्डचक्रादेर्घटकारणतास्वीकारेण कुलालस्य घटकारणत्वं नापनेतुं शक्यं, तथैव प्रकृतेऽपि अदृष्टस्य जगत्कारणत्वाङ्गीकारेण ईश्वरस्य जगत्कारणत्वं कथमपि नापलपितुं योग्यम् ।

यथा सूर्यः स्वभावेन समस्तं संसारमालोकयति, तथा ईश्वरोऽपि जगदुत्पत्तिस्थितिलयं स्वभावेनैव[38] सम्पादयति, प्राणिनश्च तत्कर्मजनितादृष्टानुरूपैः सुखदुःखज्ञानाऽज्ञानादिभिः नियोजयतीति न्यायदर्शन-विदामाकूतम् । जगद्रचयितुरीश्वरस्यास्य "खण्डघटः, कुलालकृतिजन्यः, घटत्वात्" इत्यनुमानेनापि जीवात्मककुलालकृतिजन्यत्वस्य खण्डघटे बाधात्, खण्डघटरचनासमर्थस्य कुलालस्य परमात्मन एव कृतिजन्यत्वस्य तत्र प्रसिद्ध्या, खण्डघटजनककृत्याश्रयकुलालत्वेन सिद्धिः न्यायदर्शनसम्मता । एतेन "नमः कुलालेभ्यः[39] कर्मारेभ्यः" इति श्रुतिवाक्यमपि सङ्गच्छते । एवमेव सर्वत्र घटे कुलालचेष्टा-

जन्यत्वमपि अतिरोहितमेव । खण्डघटञ्चोत्पादयितुं परमेश्वरकृतिजन्या चेष्टा एव समर्था । हिताहितप्राप्ति- परिहारानुकूलायाः शरीरक्रियाया[40] एव चेष्टात्वात्, परमेश्वरकृतिजन्यायाः चेष्टाया अपि आश्रयेण केनापि ईश्वरशरीरेण नूनं भाव्यमिति विवेचनेनानेन आविष्क्रियते ।

ईश्वरस्य सशरीरत्वस्वीकारे अस्यापरोक्षत्वापत्तिस्तु ईश्वरशरीरस्य परमाणुरूपताभ्युपगमेन निरसनीया । परमाणुषु हिताहितप्राप्तिपरिहारानुकूलायाः[41] क्रियायाः अभावात् चेष्टाश्रयत्वरूपं शरीरत्वमनुपपन्नमिति तु व्यामोहमात्रम्, अन्वयव्यतिरेकाभ्यां कार्यत्वावच्छिन्नं प्रति क्रियात्वेनैव हेतुत्वस्वीकारेण क्रियात्मकचेष्टाश्रयत्वस्य ईश्वर-शरीरे परमाणुष्वपि अक्षतत्वात् । चेष्टावत्त्वमात्रं शरीरलक्षणमिति स्वीकारे शरीरावयवे हस्तपादादिष्वपि शरीरत्वव्यवहारः शक्रेणाप्यपनेतुमशक्यः, हस्तादिषु अवयवेषु शरीरत्वापत्तिमिमां निराकर्त्तुं शरीरलक्षणं 'द्रव्यान्तरानारम्भकत्वविशिष्टा-वयवित्वरूपेणान्त्यावयवित्वेनापि[42] अवश्यं विशेषणीयम् । एवञ्च हस्ताद्यवयवेषु चेष्टायाः सत्त्वेऽपि अन्त्यावयवित्वाभावात् चेष्टावदन्त्यावयवित्वरूपं शरीरलक्षणं हस्तादिषु नातिव्याप्तमिति अनवद्यम् ।

परमाणुरूपे ईश्वरशरीरे परिष्कृतमिदं शरीरलक्षणं परमाणोः द्व्यणुकारम्भकत्वेन, द्रव्यान्तराना-रम्भकत्वविशिष्टावयवित्वरूपान्त्यावयवित्वविशेषणस्य असत्वात् कथं सङ्गमनीयमिति प्रश्नः, शरीरलक्षणे अन्त्यावयवित्वस्थाने द्रव्यारम्भकावयविभिन्नत्वनिवेशपुरस्सरं सुसमाधेयः । हस्तादीना-मवयवानां शरीरात्मकद्रव्यारम्भकत्वेन अवयवित्वेन च द्रव्यारम्भकावयविभिन्नत्व-विशेषणशून्यत्वात् नास्ति शरीरत्वव्यवहारापत्तिः । ईश्वरशरीराणां परमाणूनां तावद् द्व्यणुकात्मकद्रव्यारम्भकत्वेऽपि अवयवित्वाभावात्, द्रव्यारम्भकावयविभिन्नत्वविशेषणमुपपद्यते, फलतः परमाणूनां शरीरत्वानुपपत्तिरपि सुदूरपराहता तिष्ठति । एवञ्च परमेश्वरकृतिजन्यचेष्टाविशिष्टैः परमाणुरूपशरीरैरेव जगति कार्याणा-मुत्पत्त्या सर्वं समञ्जसमिति निभालनीयम् ।



---

1. (क) नायं प्रमेयमात्रविषयः प्रश्नः, प्रमेयमात्रस्य प्रमाणलक्षणोद्देशेनाधिगतत्वात् । प्रमेयविशेषावधारणार्थस्तु भवेत् । कतमं तत् प्रमेयं यदनेन प्रमाणेन यथावत् परिज्ञायमानमपवर्गाय, अनवगम्यमानञ्च संसारायेति । एतदर्थ-प्रकाशनार्थम् आत्मादिसूत्रम् ।............न पुनरिदं प्रमेयमात्रावधारणार्थं सूत्रम्; अपि तु प्रमेयविशेषावधारणार्थम्, सूत्रेण प्रमेयं विहितमिति पुनः प्रमेयस्याभिधानात् प्रमत्तवाक्यमिदं स्यात् ।
   न्या. सू. भा. वा., अ. 1 आ. 1 सू. 9, पृ. 382-383 ।

   (ख) न प्रमेयपदं प्रमेयमात्रे प्रवर्त्तते, किन्तु यत् तत्त्वतो ज्ञायमानमपवर्गसाधनं तस्मिन् ।
   न्या. सू. भा. वा.टी., अ. 1 आ.1 सू. 9, पृ. 385 ।

   (ग) तस्मादनुष्ठेयगतं ज्ञानमस्य विचार्यताम् ।
   कीटसङ्ख्यापरिज्ञानं तस्य नः क्वोपयुज्यते ॥ 33 ॥ प्रमाणवार्तिक (प्रमाणसिद्धिप्र.)

2. 'चेष्टेन्द्रियार्थाश्रयः शरीरम्' न्या. सू., अ. 1, आ. 1, सू. 11 ।

3. (क) हिताहितप्राप्तिपरिहारार्थः परिस्पन्दः । सुखसाधनोपलब्धौ तदीप्साप्रयुक्तस्य यः परिस्पन्दः सा चेष्टा इत्युच्यते । एवं दुःखसाधनोपलब्धौ तज्जिहासानुष्ठानलक्षणः परिस्पन्द इति । न्या. सू. भा. वा., अ. 1 आ. 1 सू. 11, पृ. 405 ।

(ख) चेष्टा व्यापारः, स चातिव्यापकतया अव्यापकतया च न लक्षणम्, वृक्षादिषु भावात्, अभावाच्च पाषाण-मध्यवर्तिमण्डूकादिशरीरे इति भावः ............ न च व्यापारमात्रं चेष्टा अभिमता; अपि तु विशिष्टो व्यापारः। स च न वृक्षादिष्वस्तीति नातिव्यापकता। यद्यपि च दारुयन्त्रादिषु ईदृशो व्यापारोऽस्ति, तथापि मूर्तान्तराप्रयोगे सतीति विशेषणाद् न व्यभिचारः, तेषां शरीरेण मूर्तेन प्रयोगात्। शरीरस्य तु मूर्तान्तरा-प्रयुक्तस्य ईदृशव्यापाराश्रयत्वम्, पाषाणमध्यवर्तिनश्च मण्डूकदेहस्य तद्व्यापारायोगेऽपि, तद्योग्यत्वात्, पाटिते पाषाणे तादृशस्य तद्व्यापारस्य दर्शनादिति भावः। न्या. सू. भा. वा. टी., अ. 1 आ. 1 सू. 11 पृ. 407।

(ग) प्रयत्नवदात्मसंयोगासमवायिकारणात्यन्तावयविक्रिया चेष्टा।

न्या. सू. भा. वा. टी. प., अ. 1 आ. 1 सू. 11, पृ. 408।

4. तथापि न समवाय इन्द्रियाणां शरीरे। घ्राणस्य पार्थिवत्वेन समवायो न विरुद्ध इति चेत्, न, तस्य शरीरावयवसमवायित्वेन शरीरासमवायात्। न्या. सू. भा. वा. टी. अ. 1 आ. 1 सू. 11 पृ. 408।
5. शुक्रशोणितसन्निपातञ्च योनिजं तद्द्विविधं जरायुजमण्डजञ्च, मानुषपशुमृगाणां जरायुजं पक्षिसरीसृपाणामण्डजम्। प्रश. भा. पृ. 38।
6. गर्भवेष्टनचर्मपुटकं जरायुः। प्रश. भा. कि. पृ. 39।
7. यद्यपि चोद्भिदोऽपि वृक्षादयः शरीरभेदतयाऽत्रैव व्याख्यातुमुचिताः, तथाप्यतिमन्दान्तःसञ्ज्ञतया लौकिकापेक्षया सुखदुःखभोक्त्रधिष्ठानत्वममीषामविवक्षन् प्रायेण जङ्गमोपकारकतया तदधीनतया च विषयतां विवक्षन् तेष्वेवान्तर्भाव्य व्याख्यास्यन्ते। प्रश. भा. कि. पृ. 39।
8. गन्धक्लेदपाकव्यूहावकाशदानेभ्यः पाञ्चभौतिकमिति प्रसिद्धिः। प्रश. भा. कि. पृ. 40।
9. तत्र यदि विजातीयपरमाणुभ्यामेकमारभ्येत अगन्धमरसमित्याद्यापद्येत। प्रश. भा. कि. पृ. 40।
10. गन्धवन्ति द्व्यणुकानि गन्धवद्भिरेव परमाणुभिरारभन्ते। प्रश. भा. कि. पृ. 41।
11. 'सूर्यं ते चक्षुर्गच्छतादित्यत्र' मन्त्रे 'पृथ्वीं ते शरीरमिति' श्रूयते। वा. भा. पृ. 332।
12. 'सूर्यं ते चक्षुः स्पृणोमि' इत्यत्र मन्त्रान्तरे पृथ्वीं ते शरीरं स्पृणोमीति श्रूयते। वा. भा. पृ. 332।
13. (क) प्रश. भा. कि. पृ. 37, (ख) यदवच्छिन्ने आत्मनि अर्थाभोगं जनयन्ति तच्छरीरम्।

न्या. सू. भा. वा. प., अ. 1 आ. 1 सू. 11 पृ. 409।

14. पूर्वशरीरे या प्रवृत्तिर्वाग्बुद्धिशरीररम्भलक्षणा तत् पूर्वकृतं कर्मोक्तं, तस्य फलं तज्जनितौ धर्माधर्मौ, तत्फलस्यानुबन्ध आत्मसमवेतस्यावस्थानं तेन प्रयुक्तेभ्यो भूतेभ्यस्तस्योत्पत्तिः शरीरस्य, न स्वतन्त्रेभ्य इति। न्या. सू. 60, अ. 3, आ. 2 वा. भा. पृ. 444।
15. गी. अ. 2 श्लो. 22।
16. पूर्वशरीरे या प्रवृत्तिर्वाग्बुद्धिशरीरारम्भलक्षणा तत्पूर्वकृतं कर्मोक्तम्।

न्या. सू. वा. भा., अ. 3, आ. 2, सू. 6।

17. सोऽयमारम्भः शरीरेण वाचा मनसा च पुण्यः पापश्च दशविधः।

न्या. सू. वा. भा., अ. 1 आ. 1 सू. 17।

18. प्रवृत्तिर्वाग्बुद्धिशरीरारम्भः। न्या. सू. अ. 1 आ. 1 सू. 17।
19. धर्मः पुरुषगुणः। प्रश. भा. गुण. नि. पृ. 259।
20. पूर्वशरीरे या प्रवृत्तिर्वाग्बुद्धिशरीरारम्भलक्षणा तत् पूर्वकृतं कर्मोक्तम्, तस्य फलं तज्जनितौ धर्माधर्मौ। न्या. सू. वा. भा., अ. 3 आ. 2 सू. 6 पृ. 444।
21. मातुर्जग्धान्नपानाद्यैरेधद्धातुरसम्मते। शेते विण्मूत्रयोर्गर्ते स जन्तुर्जन्तुसम्भवे॥

श्रीमद्भा. स्क. 3, अ. 31, श्लो. 5।

22. श्रीमद्भा. स्क. 3, अ. 31, श्लोक 1-4।

23. व्यूहे च गर्भनाड्यावतारितं रसद्रव्यमुपचीयते यावत्प्रसवसमर्थमिति ।
न्या. सू. वा. भा. अ. 3, आ. 2, सू. 64, पृ. 448 ।
24. "शरीरोत्पत्तिनिमित्तवत् संयोगोत्पत्तिनिमित्तं कर्म" । न्या.सू. अ. 3 आ. 2 सू. 66 ।
25. जन्म पुनः शरीरेन्द्रियबुद्धिवेदनानां निकायविशिष्टः प्रादुर्भावः ।
न्या. सू. वा. भा., अ. 1 आ. 1 सू. 2 ।
26. अथ तत्त्वज्ञानानन्तरमपवर्गे वातपुत्रीयं शास्त्रं प्राप्नोति, तत्त्वदृक् पूर्वकमिति न, निःश्रेयसस्य परापरभेदात् ।
न्या. सू. भा. वा. अ. 1 आ. 1 सू. 2 पृ. 152 ।
27. 'तदत्यन्तविमोक्षोऽपवर्गः (1.1.22) इत्येतावदेव निःश्रेयसमिति केन प्रतिज्ञातं यावता जीवन्मुक्तिरपि निःश्रेयसं भवत्येव । न्या. सू. वा. टी. प., अ. 1 आ. 1 सू. 2 पृ. 169 ।
28. अत्र श्रुतितः कृतात्मश्रवणस्य मननेऽधिकारः, मननं च आत्मन इतरभिन्नत्वेनानुमानम् । तर्कामृत, पृ. 2 ।
29. तस्मादुत्पन्नतत्त्वसाक्षात्कारस्य दोषाभावात् प्रवृत्त्युपरमे योऽनागतापूर्वानुत्पादस्तदपरं निःश्रेयसम् । तच्च तत्त्वसाक्षात्कारानन्तरं भवति । तादृशश्च मुनिस्तत्त्वज्ञानवान् शास्त्रस्य प्रणेतेति न वातपुत्रीयं शास्त्रमिति । न्या. सू. भा. वा. टी., अ. 1 आ. 1 सू. 2 पृ. 156 ।
30. एतच्च तदाहुः, यावदात्मनि धर्माधर्मौ तावदायुः शरीरमिन्द्रियाणि विषयाश्चेति । न्या. सू. भा. वा. अ. 1 आ. 1, सू. 2 पृ. 154 ।
31. "नाभुक्तं क्षीयते कर्म" 'तावदेवास्य चिरं यावन्न विमोक्ष्येऽत सम्पत्स्ये" । (छान्दोग्य 6.14.2)
न्या. सू. भा. वा. टी. अ. 1, आ. 1, सू. 2 पृ. 156 ।
32. कर्मनिमित्ते शरीरसर्गे तेन शरीरेणात्मनो वियोग उपपन्नः । न्या. सू. भा., अ. 3, आ. 2 सू. 67 पृ. 453 ।
33. तत्त्वज्ञानेन मिथ्याज्ञानवासनानाशः । न्या. सि. मुक्ता. दिनकरी, पृ. 32 ।
34. न हि कफोद्भवज्वरप्रशमनाय कफनिवृत्तौ सत्यां यत्नान्तरमातिष्ठते, तत एव तत्सिद्धेः ।
न्या. सू. भा. वा. टी., अ. 1 आ. 1 सू. 2, पृ. 157 ।
35. 'उपभोगप्रयत्न आस्थेयो' मोक्षाय त्वरमाणेनापि कायव्यूहादाविति शेषः । यस्तु न त्वरते यदा भविता कर्मक्षयस्तदा भविता मोक्षोऽपि किं त्वरया ? न्या. सू. भा. वा. टी. प., अ. 1 आ. 1 सू. 2, पृ. 173 ।
36. (क) अथोत्पन्नतत्त्वज्ञोऽवतिष्ठते, न तत्त्वज्ञानकारणम् । न्या. सू. भा. वा., अ. 1 आ. 1 सू. 2, पृ. 152 ।
(ख) तदत्यन्तविमोक्षलक्षणोऽपवर्गो निःश्रेयसम् । तच्चेत् तत्त्वज्ञानानन्तरम्, सम्प्रदायोच्छेदो वातपुत्रीयता च शास्त्रस्य स्याताम् । तस्मान्न तत्त्वज्ञानानन्तरं निःश्रेयसम् । तथा सति प्रमाणादितत्त्वज्ञानान्निःश्रेयसमिति मिथ्या । न्या. सू. भा. वा. टी., अ. 1 आ. 1 सू. 2, पृ. 155 ।
37. बुद्धिमता हि साक्षात्कृतं बुद्धिमत्पूर्वकं विवक्षितम् । न्या. भू. पृ. 448 ।
38. (क) यः सूर्य इव इमाँल्लोकानीशते ईशनीभिः (बटुको. 22) न्या. भू. पृ. 460 ।
(ख) न तस्य कार्यं करणं च विद्यते, न तत्समश्चाभ्यधिकश्च दृश्यते ।
पराऽस्य शक्तिर्विविधैव श्रूयते, स्वाभाविकी ज्ञानबलक्रिया च ॥
(श्वेताश्वतरोपनिषद्, 3/3)
39. एतेन 'नमः कुलालेभ्यः कर्मारेभ्यः' इत्यादि यजूंषि बोद्धव्यानि । न्या. कुसु. स्त. 5, का. 5 ।
40. यद्यपि चेष्टा कायव्यापारस्तथापि तस्यैव लक्ष्यत्वादितरेतराश्रयभिया व्यापारमात्रं वक्तव्यम् ।
न्या. सू. भा. वा. टी. प., अ. 1 आ. 1 सू. 11, पृ. 408 ।
41. प्रयत्नवदात्मसंयोगासमवायिकारणान्त्यावयविक्रिया चेष्टा, फलद्वारा तु हिताहितप्राप्तिपरिहारयंतेति । न्या. सू. भा. वा. टी. प., अ. 1 आ. 1 सू. 11, पृ. 409 ।
42. मनःकरचरणादयस्तु अन्त्यावयविपदेनैव निरस्ताः ।
न्या. सू. भा. वा. टी. प., अ. 1 आ. 1 सू. 11, पृ. 409 ।

# द्वादशज्योतिर्लिङ्गदर्शनम्

**प्रो. रामयत्नशुक्लः**

भारतीयदर्शनेषु आस्तिक-नास्तिकदर्शनविभागो नितरां प्रसिद्धः। दर्शनशब्दो हि दृश्-धातोः करणे ल्युटि सति सिद्धयति। दृश्धातुर्हि ज्ञानसामान्ये वर्तते। अत एव "पश्यार्थैश्चानालोचने" इति सूत्रे 'अनालोचने' इति विशेषणं सङ्गच्छते। आलोचनं चाक्षुषज्ञानम्, तद्भिन्नमनालोचनम्। यदि चाक्षुषज्ञाने एव दृश्धातोर्वृत्तिस्तदा अचाक्षुषार्थस्याप्रसिद्धया अनालोचनविशेषणानुपपत्तिः। तस्माद् ज्ञानसाधनेऽर्थे दर्शनपदप्रवृत्तिः। यद्यपि चक्षुरादीनामपि ज्ञानसाधनतया तत्रातिव्याप्तिः सम्भवति, तथाप्यत्र योगरूढिस्वीकारेण, यस्यार्थस्य चक्षुरादिभौतिकप्रमाणैर्न प्रसिद्धिः, तत्साधनं दर्शनम्। तच्च तत्त्वं सूक्ष्मातिसूक्ष्ममात्मतत्त्वमेव। स आत्मा प्रतिपाद्यो दर्शनशास्त्रस्य। तस्यैवात्मनः श्रवणमनन-निदिध्यासनपराणि शास्त्राणि दर्शनपदव्यपदेश्यानि भवन्ति। नास्तिकदर्शनमपि आत्मतत्त्वमेव साधयद् युक्त्या एकस्मिन्नेव तत्त्वे निर्धारणां कुरुते। तस्य तस्येन्द्रियादेरापेक्षिकं सूक्ष्मत्वमस्त्येव। विना तदाश्रयणं नात्मतत्त्वं स्थिरीकर्तुं शक्यते। आस्तिकदर्शनानि तु शरीराद्यतिरिक्तमात्मतत्त्वं प्रतिपादयन्ति, स्वकीयं सूक्ष्मात्मपरत्वं सूचयन्त्येव। तानि च शास्त्राणि दर्शनशास्त्राणि कथ्यन्ते। दर्शनशास्त्राणि सूक्ष्मपराणि विभिन्नगम्भीररहस्यानीति विशिष्टप्रतिभासनाथाधिकारिजनसंवेद्यानि भवन्ति। मन्दाधिकारिजन-संवेद्यानि न भवन्ति। अतः आत्मतत्त्ववेदनपराणि अनेकानि उपायभूतानि अपि शास्त्रेषु वर्णितानि। तद् यथा—तस्यैव परमात्मनो बोधाय अनेकानि रूपाणि निर्गुणनिराकाराणि, सगुणसाकाराणि च शास्त्रेषु श्रद्धया कल्पितानि। एतानि च परमतत्त्वप्राप्तिकराणि आलम्बनभूतानि। अवतारवादोऽपि एतदेव साधयति, तेषां तेषामवताराणां चर्चा तेषु तेषु च शास्त्रेषु विशिष्टरूपेण कृतास्ति। तेषामवताराणां पुराणादिप्रतिपादितानां जनतातापापनोदनाय भक्तजनप्रार्थनया ईश्वरानुमोदनेन तत्र तत्र भक्तशिरोमणिभिः प्रतिष्ठापिता मूर्तयो विराजन्ते। भारतपावनभूमौ भारतगुणगौरवं सोपानन्यायेन सूक्ष्मदर्शने सहकारीति तदपि दर्शनपदेन ग्रहीतुं शक्यते।

मूर्तिषु पुराणादिप्रतिपादितासु द्वादशज्योतिर्लिङ्गमूर्तयो विशेषतो हि पुराणादिषु आख्यायमाना जनमानसकालुष्यापहारिण्यो वर्तन्ते। इमानि ज्योतिर्लिङ्गानि आत्मज्योतिर्ज्ञापकानि उत अत्रायं पुरुषः स्वयंज्योतिरिति श्रुत्या आत्मनो ज्योतिःपदवेदनीयतया तज्ज्ञापकत्वेनैवैषां ज्योतिर्लिङ्गत्वम्। अत्र निबन्धे, इमानि ज्योतिर्लिङ्गानि कृत्यानि, किम्प्रमाणानि तत्र गमने मार्गनिर्देशनानि तत्सम्बद्धानि विवेचनीयान्यन्यानि आवश्यकानि विचारयिष्यन्ते। मन्ये, अस्याध्ययनेन कोऽपि लाभो लब्धः स्यादिति प्रवृत्तिबीजम्। शिवपुराणे प्रोक्तमस्ति यद् भूतभावनो भगवान् शङ्करः प्राणिकल्याणाय प्रतितीर्थं वासं

कुरुते । भक्तजनैरर्चितस्तत्राविर्भूतः सन् ज्योतिर्लिङ्गरूपः सदैवावस्थितो भक्तजनानानन्दयति । यद्यपि शिवलिङ्गान्यनेकानि, तेषु निम्नलिखितानि द्वादशज्योतिर्लिङ्गानि प्रधानभूतानि–

**"सौराष्ट्रे सोमनाथञ्च श्रीशैले मल्लिकार्जुनम् ।**
**उज्जयिन्यां महाकालमोङ्कारममलेश्वरे ॥**
**केदारं हिमवत्पृष्ठे डाकिन्यां भीमशङ्करम् ।**
**वाराणस्याञ्च विश्वेशं त्र्यम्बकं गौतमीतटे ॥**
**वैद्यनाथं चिताभूमौ नागेशं दारुकावने ।**
**सेतुबन्धे च रामेशं घुश्मेशं च शिवालये ॥**
**द्वादशैतानि नामानि प्रातरुत्थाय यः पठेत् ।**
**सप्तजन्मकृतं पापं स्मरणेन विनश्यति ॥**
**यं यं काममपेक्ष्यैव पठिष्यन्ति नरोत्तमाः ।**
**तस्य तस्य फलप्राप्तिः भविष्यति न संशयः ॥**
**एतेषां दर्शनादेव पातकं नैव तिष्ठति ।**
**कर्मक्षयो भवेत्तस्य यस्य तुष्टो महेश्वरः" ॥**

एतद्विषये शिवपुराणम्, महाभारतम्, रामायणमित्येवमादि प्रमाणम् ।

इतः परं श्लोकोक्तप्रकारेण क्रमशो लिङ्गानां द्वादशानां विषये उच्यते । तत्र गमने मार्गनिर्देशनाय सर्वसाधारणसौविध्याय च टिप्पणी दास्यते ।

## (1) सौराष्ट्रे सोमनाथः

श्रीसोमनाथः काठियावाडप्रदेशान्तर्गते प्रभासक्षेत्रे विराजते । यत्र लीलापुरुषोत्तमो भगवान् श्रीकृष्णो यदुवंशसंहारं कारयित्वा जराव्याधिविद्धपादपद्मः स्वां लीलामुपसंजहार ।

अस्य प्रभासक्षेत्रस्य संक्षिप्तः परिचयः अयमस्ति–दक्षप्रजापतिः स्वकन्यानां सप्तविंशतिं श्रीचन्द्रेण सह विवाहयामास; किन्तु चन्द्रमसोऽनुरागातिशयो रोहिण्यामभूत् । अतः अन्यासां मनःसु कष्टातिशयोऽजनि । तासां कष्टमनुभूय दक्षराजेन आग्रहीतोऽपि चन्द्रः स्वां मतिं न तत्याज । फलतो दक्षप्रजापतिनाभिशप्तश्चन्द्रः क्षयी जातः । सुधाकरस्य चन्द्रमसः सुधावर्षणमवरुद्धमभूत् । निखिलेऽपि ब्रह्माण्डे हाहाकारोऽभवत् । निशाकरप्रार्थनावशेन इन्द्रादिदेवताः, वशिष्ठादिमुनयश्च तत्र किमपि कर्तुमप्रभवः पितामहस्य ब्रह्मणः सेवायामुपातिष्ठन् । ब्रह्मोवाच–देवादिभिः सह चन्द्रमाः प्रभासतीर्थे मृत्युञ्जयं भगवन्तमाराधयेत् ।। तत्प्रसादेनैव रोगविमुक्तिः स्यादिति । तदाज्ञया चन्द्रो देवमण्डलेन प्रभासक्षेत्रमुपगम्य भगवन्तं मृत्युञ्जयमाराधयामास षण्मासान् नैरन्तर्येण घोरं तपश्चक्रे । दश-लक्षसंख्याको जपोऽभूत् । तेन आशुतोषो भगवान् सन्तुष्टः प्रकटितः अमरत्ववरं दत्त्वोवाच, यत् चिन्तां मा कार्षीः । कृष्णपक्षे प्रतिदिनम् एकैका कला क्षीणा भविष्यति,तथा शुक्लपक्षे प्रतिदिनम् एकैका कला वर्द्धिष्यते । एवं क्रमेण प्रतिपूर्णमासित्वं पूर्णचन्द्रो भवेः । एवमाशीर्भिराप्यायितः चन्द्रमाः

पुनः सुधावर्षणेन, जगच्चक्रं प्राणयामास । चन्द्रादिभक्त्या पूजितः प्रार्थितश्च पार्वतीसहितः श्रीशङ्करो भगवान् भक्तानुद्दिधीर्षुः ज्योतिर्लिङ्गरूपेण प्रभासक्षेत्रे सोमस्थापिततया सोमनाथरूपेणाद्यापि विराजते ।

## (2) श्रीशैले मल्लिकार्जुनः

आन्ध्रप्रदेशे कृष्णाजनपदे कृष्णानद्याः पावनतटे श्रीशैलो नाम पर्वतोऽस्ति । यो दक्षिणकैलासः कथ्यते । महाभारते शिवपुराणे पद्मपुराणादिषु चास्य वर्णनं मिलति । श्रीशैलं गत्वा तत्र च शिवपूजनं कृत्वा अश्वमेधयज्ञफलं लभ्यते । किञ्च, शास्त्रेषु वर्णितमिदमस्ति यत् श्रीशैलपर्वतदर्शनमात्रेण सर्वाणि दुःखानि विनश्यन्ति । अत्यन्तसुखं च लभ्यते, मोक्षश्च प्रसिद्ध्यति ।

**"श्रीशैलशिखरं दृष्ट्वा पुनर्जन्म न विद्यते ।**
**दुःखं हि दूरतो याति शुभमात्यन्तिकं लभेत् ॥**
**जननीगर्भसम्भूतं कष्टं नाप्नोति वै पुनः" ।**

मल्लिकार्जुनमन्दिरस्य नीचैस्तले स्थितायां कृष्णानद्यां स्नानमपि महत्त्वपूर्णमस्ति । इयं च पातालगङ्गेति नाम्नापि प्रसिद्धा ।

## (3) उज्जयिन्यां महाकालः

श्रीमहाकालेश्वरज्योतिर्लिङ्गं मालवप्रदेशान्तर्गतायाः क्षिप्रानद्यास्तटे उज्जयिन्या-(उज्जैन)मस्ति । इयमवन्तिकापुरी कथ्यते । सप्तपुरीषु इयमन्यतमा । क्षिप्रास्नानेन ब्राह्मणभोजनेन च सर्वपापनाशः, दारिद्र्यं च विनश्यति । अत्र मङ्गलग्रहजन्मस्थानम्, मङ्गलेश्वरः, भर्तृहरिगुहा, सान्दीपनि-ऋषेराश्रमश्च वर्तते, यत्र श्रीकृष्णबलरामौ अधीतवन्तौ । महाकालेश्वरलिङ्गस्थापनाविषये इत्थं मिलति यत् पुरा अवन्तिकापुर्याम् अग्निहोत्री वेदज्ञः कोऽपि ब्राह्मणोऽभूत् । यो देवप्रियप्रियमेधा-सुकृत-सुव्रतनामकैः पुत्रैरुपेतः शिवभक्तिधर्मनिष्ठाप्रधानो विराजते स्म । तस्य निर्मलां कीर्तिं श्रुत्वा ब्रह्मवरगर्वितो दूषणनामा असुरो रत्नमालपर्वतवास्तव्यः सदलबलः अचक्राम । हाहाकारोऽभूत् । ब्राह्मणभक्त्या तुष्टो भगवान् शङ्करस्तदाविर्भूतः । एकेनैव हुङ्कारेण तं मारयामास, सदैव तत्र स्ववासं स्वीकृत्यान्तर्हितः । तदेव महाकालनाम्नो ज्योतिर्लिङ्गं भक्तजनैरद्यापि द्रष्टुं शक्यते । तत्र सन्निधौ मातुः पार्वत्या गणेशस्य च मूर्ती विद्येते । भयङ्करहुंकारेण प्रकटनमभूदिति हेतोरस्य लिङ्गस्य महाकालेति नामाभूत् । मन्दिरस्योर्ध्वभागे ओङ्कारेश्वरस्य नीचैस्तले महाकालेश्वरो विराजते । भक्तगणो रामघट्टे, कोटितीर्थनामके कुण्डे च स्नात्वा श्राद्धञ्च कृत्वा समीप एव अगस्त्येश्वरस्य, कोटीश्वरस्य, केदारेश्वरस्य, हरसिद्धिदेव्या(विक्रमादित्यकुलदेव्या)श्च दर्शनं कुर्वन्तो महाकालेश्वरं पश्यन्ति । प्रतिदिनं तल्लिङ्गे चिताभस्मलेपः क्रियते । तदानीन्तनं दर्शनं पुण्याय मन्यते ।

## (4) अमलेश्वरे ओङ्कारः

स्थानमिदं मालवाप्रान्ते नर्मदातटे विद्यते । खण्डवातः 'छोटीलाइनसमीपे' मोरटक्का-नामक-स्टेशनमस्ति । ततः सप्तमीले स्थानमिदं प्राप्तुं शक्यते । खण्डवातः 37 मीले दूरे उज्जयिनीतश्च 89

मीलदूरे। तत्र नर्मदा विभागद्वयेन प्रवहति। मध्ये एकः पर्वतखण्डो राजते। स च मान्धाता इति शिवपुरीति वा कथ्यते। अस्मिन्नेव पर्वते ओङ्कारेश्वरो विराजते, प्रसिद्धो मान्धाता सूर्यवंशोद्भवः, यस्य पुत्रौ अम्बरीष-मुचुकुन्दौ भगवद्भक्तौ अभवताम्। अत्र विशिष्टं तपश्चक्रे। स्वतपस्यया च भगवन्तं शिवं तोषयामास। अत एवास्य पर्वतस्य मान्धातेति नाम अभवत्। इदं लिङ्गं प्राकृतिकमेवास्ति। समग्रमपि पर्वतमोङ्कारेश्वररूपमपि मन्यते। अत एव पर्वतपरिक्रमा-परम्परापि दृश्यते। प्राचीन-मन्दिरेषु सिद्धेश्वरमहादेवमन्दिरं दर्शनीयतमं विद्योतते। परिक्रमायां नानामन्दिराणि वर्तन्ते, अत एव अस्य पर्वतस्य स्वरूपमोङ्कारसदृशं जायते। ओङ्कारेश्वरमन्दिरं तस्मिन्नोङ्कारे चन्द्ररूपं भवति। मन्दिरे जगन्मातुः पार्वत्या अपि मूर्त्तिर्वर्तते। अस्या दर्शनस्य नर्मदास्नानस्य च माहात्म्यं शास्त्रेषु बहुधा वर्णितमस्ति। अतस्तद्दर्शनमवश्यं कर्त्तव्यम्।

द्वादशलिङ्गेषु ओङ्कारेश्वरस्य गणना वर्त्तते; किन्तु अमलेश्वरस्यापि नामोल्लेखो मिलति। कैश्चित् तयोरभेदो मन्यते। कैश्चित्तु द्वयोः पृथक् सत्ता मन्यते। गणानायां द्वयोरेकस्थानस्थित्या ऐक्यं मत्त्वा द्वादशत्वं सङ्ख्या निर्धार्यते। प्रमाणाय तु तत्र द्वयोः स्थितिरेव। अमलेश्वरस्य भगवतो मूर्त्तिः नर्मदाया दक्षिण-तटे एकस्मिन् ग्रामे अस्ति। अत्रायमितिहासः –

एकदा विन्ध्यपर्वतः पार्थिवार्चनेन सह ॐकारनाथस्य षण्मासैः महत्या भावनया पूजनं चकार। प्रसन्नः शिवः आविर्भूतोऽभूत्। तस्मै च वरं ददौ। तदैव देवा ऋषयश्च जग्मुः। तेषां प्रार्थनया भगवान् शिवः ओङ्कारलिङ्गं द्विधा विभाजयामास। एकत्र भगवान् शिवः ओङ्काररूपेण विरेजे। अतस्तस्य ओङ्कारेश्वर इति नाम। यश्च पार्थिवलिङ्गरूपेण आविर्बभूव, तल्लिङ्गम् अमरेश्वरेति नाम्ना प्रसिद्धमभूत्।

## (5) हिमवत्पृष्ठे केदारः

उत्तरखण्डे केदारनाथस्य बदरीनाथस्य अतिशयितो महिमा वर्त्तते। केदारनाथस्य भगवतो विषये विशेषो मिलति यत् श्रीकेदारनाथमदृष्ट्वा बदरीनाथदर्शनं निरर्थकं भवति–

**"अकृत्वा दर्शनं वैश्य केदारस्याघनाशिनः।**
**यो गच्छेद् बदरीं तस्य यात्रा निष्फलतां व्रजेत्"** ॥ (केदारखण्डः)

केदारनाथस्य दर्शनानन्तरं नर-नारायणदर्शनेन महत्फलं लभ्यते, तस्यैव रूपं दृष्ट्वा च सर्वपापैः प्रमुच्यते–

**"जीवन्मुक्तो भवेत् सोऽपि यो गतो बदरीवने ॥**
**दृष्ट्वा रूपं नरस्यैव तथा नारायणस्य च।**
**केदारेश्वरनाम्नश्च मुक्तिभागी न संशयः"** ॥

अस्य ज्योतिर्लिङ्गस्थापनाविषये आख्यानमिदं लभ्यते यद् हिमालय-केदारशृङ्गे नरनारायणाभ्यां तपः चक्रे, तद्भक्त्या प्रसन्नः शिवः, तत्प्रार्थनया तोषितश्चात्र खण्डे सार्वदिकं वासं स्वीचक्रे।

श्रीकेदारनाथः हिमालयकेदारशृङ्गे विराजते । शिखरपूर्वभागे अलकनन्दासुरम्यतटे बदरीनारायणो विद्योतते । पश्चिमे च मन्दाकिनीतटे श्रीकेदारनाथो राजते । अलकनन्दा-मन्दाकिनीनद्यौ रुद्रप्रयागे मिलिते जायेते । एतयोः संयुक्तधारा गङ्गोत्रीक्षेत्रादागतायां भागीरथ्यां रुद्रप्रयागे मिलति । तत्रैव सा नदीत्रयसंयुक्तधारा गङ्गा उच्यते । अस्यां स्नानेन केदारनाथ-बदरीनाथचरणसम्बन्धो जायते । केदारनाथगमनमार्गस्तु प्रसिद्धः ।

## (6) डाकिन्यां भीमशङ्करः

भीमशङ्करलिङ्गं मुम्बईतः पूर्वस्मिन् भागे 60 मीले दूरे, पूनातः उत्तरे भागे 43 मीले दूरे भीमा-नदी-तटे विद्यते ।

अत्र डाकिन्यां भीमशङ्करमित्यनुसारेण डाकिनीनामकं स्थानमेतद् लिङ्गस्य स्यादिति निर्णीयते; किन्तु डाकिनीनामकं स्थानं नोपलभ्यते । श्रीशङ्करस्तु सह्याद्रिपर्वते विद्यते, तत एव भीमानदी निस्सरति । मूर्त्तिमध्यतो स्वल्पा जलधारा निस्सरन्ती दृश्यते । मन्दिरस्य पार्श्वे कुण्डद्वयमस्ति । मन्दिरपार्श्वे ग्रामैको विद्यते । किंवदन्ती तत्र वर्त्तते यत् त्रिपुरासुरवधानन्तरं भगवान् शिवः अत्रैव विश्रामं चक्रे । तस्मिन् समये अवधवास्तव्यो भीमकनामको राजा सूर्यवंशीयस्तपश्चकार । तेन तुष्टो महादेवस्तस्मै दर्शनं ददौ । तत एव कालादस्य 'भीमशङ्कर' इति नाम अभवत् । अस्य दर्शनस्य महिमा महान् वर्तते ।

शिवपुराणानुसारेण भीमशङ्करज्योतिर्लिङ्गं असमप्रान्ते कामरूपजनपदे गोहाटीरेलवेलाइने गोहाटीसन्निधौ ब्रह्मपुरपर्वतविभागे वर्त्तते । अस्य संक्षिप्त इतिहासश्चेत्थमस्ति– ।

कामरूपदेशे कामरूपेश्वरो नामैकः प्रतापी राजा शिवभक्तोऽभूत् । स सर्वथा पार्थिवपूजने अनुरक्तो जातः । तस्मिन्नेव समये भीमनामा कोऽपि राक्षसः समुद्भूतः, धर्मोपासकान् विद्रावयामास । कामरूपेश्वरख्यातिं श्रुत्वा स राक्षसस्तत्रागत्य राजानं युद्धाय प्रैरयत् । राजा तपो न तत्याज, मनसा च शिवं सस्मार–

**"भजामि शङ्करं देवं स्वभक्तपरिपालकम् ।"**

यदा राक्षसः कृपाणमादाय तं हन्तुमियेष तत्र कृपाणं चिक्षेप च, तदा भगवान् आविर्भूय तं राक्षसं जघान । देवादिभिः प्रार्थितस्तत्रैव निवासाय स्वीकृतिञ्च दत्तवान्–

**"इत्येवं प्रार्थितः शम्भुर्लोकानां हितकारकः ।**
**तत्रैव स्थितवान् प्रीत्या स्वतन्त्रो भक्तवत्सलः ॥"**

तत एवारभ्य इदं ज्योतिर्लिङ्गं भीमशङ्करनाम्ना भक्तगणैः पूज्यते ।

## (7) वाराणस्यां विश्वेशः

श्रीविश्वेश्वरज्योतिर्लिङ्गं प्रसिद्धायां वाराणस्यां (काश्यां) विद्योतते । अस्या नगर्या महान् महिमा वर्त्तते । प्रलयेऽपि अस्या विनाशो न भवति । तस्मिन् समये भगवान् शिव एनां त्रिशूले धत्ते, सृष्टिसमये चावतारयति । अस्यामेव नगर्यां भगवान् विष्णुः सृष्टिविधानाय तपसा आशुतोषं प्रसादयामास । तेन च शयनावसरे तन्नाभिकमलाद् उत्पन्नो ब्रह्मा जगत्सर्गं चक्रे । वसिष्ठोऽपि शिव-

पूजनेनैव पूजितोऽभूत् । विश्वामित्रश्च ब्रह्मर्षित्वमाप । अस्यां नगर्यां मृतस्य पुंसः कर्णयोः श्रीशिवः तारकमन्त्रमुपदिशति । येन स संसारबन्धनान् मुक्तो भवति–

"विषयासक्तचित्तोऽपि त्यक्तधर्मरतिर्नरः ।
इह क्षेत्रे मृतः सोऽपि संसारे न पुनर्भवेत् ॥"

काश्यामनेकतीर्थानि सन्ति, तद्यथा–

"विश्वेशं माधवं ढुण्ढिं दण्डपाणिञ्च भैरवम् ।
वन्दे काशीगुहां गङ्गां भवानीं मणिकर्णिकाम् ॥"

मत्स्यपुराणमतम्–

"जपध्यानविहीनानां ज्ञानवर्जितचेतसाम् ।
ततो दुःखहतानाञ्च गतिर्वाराणसी नृणाम् ॥
तीर्थातिपञ्चकं सारं विश्वेशानन्दकानने ।
दशाश्वमेधलोलार्ककेशवो बिन्दुमाधवः ॥
पञ्चमी तु महाश्रेष्ठा प्रोच्यते मणिकर्णिका ।
एभिस्तु तीर्थवर्यैश्च वर्ण्यते अविमुक्तकम् ॥"

काश्या उत्तरे भागे (1) ओङ्कारखण्डः, दक्षिणे (2) केदारखण्डः, मध्ये (3) विश्वेश्वरखण्डः, यत्र विश्वनाथस्य भगवतो मन्दिरं चकास्ति ।

## (8) गौतमीतटे त्र्यम्बकः

इदं ज्योतिर्लिङ्गं महाराष्ट्रप्रान्ते मुम्बईसमीपे नासिकजनपदे वर्तते । मुम्बईतः 117 मीले नासिक-नामकं रेलवेस्टेशनं वर्तते–नासिकरेवलेस्टेशनतः क्रोशद्वयं पञ्चवटीस्थानं विद्यते–यत्र रामाज्ञया श्रीलक्ष्मणेन शूर्पणखाया नासिका च्छिन्ना । अत्रैव सीताहरणमभवत् । पञ्चवटीस्थानतः 18 मीले त्र्यम्बकेश्वरज्योतिर्लिङ्गं विराजते । बसादियानसौलभ्यमस्ति । अत्रैव ब्रह्मगिरिपर्वततः गोदावरीनदी निस्सरति । गौतमीपदेनाप्येषा व्यवह्रियते । यन्महत्त्वं गङ्गाया उत्तरभारते तदेव महत्त्वं दक्षिणभारते अस्या वर्तते । दक्षिणभारते च गोदावरी गंगापदेनोच्यते । गौतमेनेयमानीता आशुतोषभगवतः कृपावशात् । भगीरथेन प्रयत्नादानीता गंगा यथा भागीरथी कथ्यते, तथैव गौतमतपःप्रभावादानीता गोदावरी गौतमी कथ्यते, सिंहराशिस्थिते गुरौ इह कुम्भमेलापको वैशिष्ट्येन सम्पाद्यते । अस्मिन् पर्वणि गोदावरीस्नानमहिमा विशेषतो वर्णितः शास्त्रेषु । पुण्यतोयाया गोदावर्य्या उद्गमसथानेऽवस्थितस्य त्र्यम्बकलिङ्गस्य महिमातिशयितो वर्तते ।

गौतममहर्षेः विशिष्टप्रार्थनया भगवान् शिवः अत्र निवासाय स्वीकृतिं प्रदाय त्र्यम्बकेश्वरनाम्ना विख्यातोऽभूत् । मन्दिराभ्यन्तरे स्वल्पगर्ते लिङ्गत्रयरूपेण त्र्यम्बकेश्वरो विरेजे । अयं त्रिलिङ्गात्मा शिवः, ब्रह्मविष्णुरुद्रप्रतीकतया मन्यते । त्रिमूर्तौ ब्रह्मगिरितो निस्सरन्त्या गोदावर्याः धारा अविच्छिन्नरूपेण पतन्ती दृश्यते । शिवपुराणानुसारेण त्र्यम्बकेश्वरस्य भगवतो दर्शनं मानवानां परमश्रेयसे भवति ।

ब्रह्मगिरेरुपरि गमनाय 700 सोपानपरम्पराः सन्ति । सोपानारोहक्रमे मध्ये रामकुण्डं लक्ष्मण-कुण्डञ्च मिलतः । शिखरारोहे गोमुखान्निस्सरन्त्या गोदावर्या दर्शनं पावनं जायते ।

## (9) चिताभूमौ वैद्यनाथः

इदं स्थानं वैद्यनाथपदेनेदानीं विख्यातमस्ति । वैद्यनाथो रावणेश्वरवैद्यनाथः, यतोऽयं रावणद्वारा स्थापितः । अयञ्च द्वादशज्योतिर्लिङ्गेषु अन्यतमोऽस्ति । प्रमाणं प्रदत्तमेव ।

पद्मपुराणे पातालखण्डे एतद्विषये कथानकमिदमस्ति यत्–एकदा लङ्कापतिः रावणो महादेवं प्रार्थयामास–भगवन् ! पूजनायात्र प्रतिदिनमागमने काठिन्यमनुभूयते, अतः कृपावत्सलो भगवान् कृपया लङ्कायामेव स्वनिवासं करोतु । श्रीशिवः प्रसन्नः सन्नुवाच–यदि त्वं मार्गमध्ये कुत्रापि मां न भूमौ अवस्थापयेः, तदा लङ्कायां चलामि, यदि मध्ये भूमौ मां निधापयिष्यसि तदा अहं तत्रैव निवत्स्यामि, रावणः शिवस्य पणं स्वीकृत्य शिवमादाय लङ्कां गन्तुं प्रस्थितः । एवमाकर्ण्य देवाः समुद्विग्ना अभवन्, यतो यदि सदाशिवः लङ्कायां प्रतिष्ठापितः, तदा रावणः अजरोऽमरो भविष्यति । ते देवा भगवन्तं विष्णुं जग्मुः । तेन साहाय्यदानाय प्रतिजज्ञे । इतो देवमायया रावणो लघुशङ्कापरतन्त्रो विचारयामास यद् यद्यहं श्रीशिवं भूमौ निधाय लघुशङ्कां करोमि तदा श्रीशिवोऽत्रैव स्थास्यति लङ्कायां न यास्यति, यदि न स्थापयामि भूमौ, तदा प्राणभयम् इति चिन्तयति तस्मिन् भगवान् विष्णुर्विप्ररूपो प्रादुरभूत् । तं ब्राह्मणं दृष्ट्वा रावणः प्रसन्नः सन् उवाच–महाराज, क्षणं श्रीशिवमादाय तिष्ठतु यावल्लघुशङ्कां करोमि । स ब्राह्मणः प्रथमतः उपेक्षाञ्चक्रे; किन्तु रावणप्रार्थनया तद्दुर्दशया कृपापरतन्त्रः स्वल्पकालं मूर्ति-मादायावस्थितोऽभूत् । रावण एकदण्डकालेनैव लघुशङ्काविधानाय कृतप्रतिज्ञोऽपि मायया सुदीर्घ-लघुशङ्कः, अधिककालयापनेऽपि नोत्थितः, तदा स ब्राह्मणो देवः मूर्तिं तत्रैव संस्थाप्य ततो गतः । प्रत्यावर्तितो रावणो यदा भूमिगतां मूर्तिं ददर्श, उत्थाने च कृतयत्नोऽपि असफलोऽभूत्, निराशो लङ्कां जगाम । भगवान् शिवस्तत्रैवावस्थितो वैद्यनाथनाम्ना विख्यातोऽभवत् ।

इदमपि वर्णनमुपलभ्यते यद् यदा रावणः शिवोत्थापनेऽसमर्थस्तदा क्रुद्धः सन् अङ्गुष्ठपीडितं कृत्वा शिवं प्राह अत्रैव स्थिरो भव । अत एव तल्लिङ्गे मूर्तौ मध्ये स्वल्पगर्तो दृश्यते ।

रावणेन यत्र लघुशङ्का कृता तत्रैव एका नलिकाजायत यस्य नाम रावणखारेति जातम् । शिवलिङ्गप्रसादोऽत्र न भुज्यते; किन्तु वैद्यनाथप्रसादस्तु भक्तैर्भुज्यते । वैद्यनाथसन्निधौ स्वच्छभावनया यदि सत्याग्रहपूर्वकं सत्संकल्पो विधीयते, तदा तस्य अवश्यफलम्भवेत् । अत्र देवधरसिद्धपीठमस्ति । दक्षयज्ञविध्वंसानन्तरं शोकाकुलो भगवान् शङ्करः सतीशवं स्कन्धे निधाय पृथिवीपरिक्रमां विदधान आसीत् । भगवान् विष्णुः शिवमोहनिवृत्तये सतीशवं चक्रेण मध्ये-मध्ये चिच्छेद । चक्रच्छेदेन सतीशवाङ्गानि यत्र पेतुः, तानि सिद्धपीठानि अभवन्–देवधरस्थाने हृदयं पपात, अत इदं हार्दपीठमुच्यते । श्रीशिवस्येदं स्थानमत्यन्तं प्रियमस्ति । अत्रापि मरणे तारकोपदेशः शिवकर्तृकः मुक्तये भवति ।

केचन निजामहैदराबादराज्ये परलीग्रामे शिवलिङ्गमेव वैद्यनाथं मन्यन्ते, किन्तु द्वादशलिङ्गवर्णने शिवपुराणे या गणना कृता तन्मध्ये वैद्यनाथं चिताभूमौ इति प्रमाणमस्ति, तेन जसडीह-समीपस्थितं लिङ्गमेव बिहारप्रान्ते वैद्यनाथपदेन वस्तुतो गण्यते। यतः चिताभूमिः इयमेव कथ्यते, भगवान् शङ्करः सतीदेव्याः शवं स्कन्धे निधाय उन्मत्त इव इतस्ततः पर्यटन्नासीत् तदैव सतीदेव्या हृत्पिण्डं तरलं भूत्वा इहैव निपपात, महादेवस्तस्य दाहसंस्कारं कृतवान्। अतः चिताभूमिरियमेवेति निश्चितम्।

## (10) दारुकावने नागेशः

नागेश्वरज्योतिर्लिङ्गस्थापनाविषये अयमितिहासो वर्तते—पुरा एकः सुप्रियो नाम वैश्योऽभूत्, यो धार्मिकः सदाचारः श्रीशिवस्यानन्यभक्तश्चासीत्। स कदाचिन्नौकामारुह्य सपरिकरः कुत्रापि गच्छन्नासीत्। तदैवाकस्माद् दारुको नाम राक्षसो नौकामचक्राम। तत्रारूढान् सर्वानपहृत्य स्व-पुरीमानीय कारगारे बबन्ध; किन्तु सुप्रियस्य शिवार्चना तत्रापि नावरुद्धा। स तन्मयतया शिवा-राधनञ्चक्रे। तस्य शिवनिष्ठां श्रुत्वा दारुकः कोपात्तत्रागत्य ध्यानावस्थितञ्च तमवलोक्योवाच, रे मूर्ख! नेत्रे निमील्य त्वमत्र किं षड्यन्त्रचक्रं कुरुषे। विशिष्टं घोरं नादमकृत; किन्तु सुप्रियस्य शिवध्यानं तथैवाभूत्। एवमालोक्य तं हन्तुं स्वानुचरान् आदिदेश। सुप्रियस्तावतापि स्वसमाधितो न चचाल। भक्तवत्सलं शिवमेव संस्मार। फलतस्तस्मिन्नेव कारागारे शिवो भगवान् एकस्मिन्नुच्चतमे स्थाने प्रकाशमानसिंहासने स्थितो ज्योतिर्लिङ्गरूपोऽदृश्यत। तस्मै भक्तशिरोमणये प्रसन्नः पाशुपतास्त्रमपि दत्तवान्। श्रीशिवस्यान्तर्धाने सुप्रियः पाशुपतास्त्रेण सपरिकरं दारुकं हत्वा शिवसन्निधिमाप। भगवतः शिवस्यादेशादेव तल्लिङ्गस्य नाम नागेशज्योतिर्लिङ्गमजायत। अस्य दर्शनस्य महिमा अतिशयितो वर्तते। तथा चोक्तम्—

**एतद् यः शृणुयान्नित्यं नागेशोद्भवमादरात्।**
**सर्वान् कामानियाद् धीमान् महापातकनाशवान्॥** ( शि. पु. अ. 4 )

नागेश्वरलिङ्गविषयेऽपि द्वैविध्यमस्ति, केचिद् वदन्ति यद् नागेश्वरलिङ्गं निजामहैदराबादराज्ये वर्तते; किन्तु शिवपुराणाद्यवलोकनेनेदं निर्णीयते यद् उपरिलिखितं द्वारकाधिष्ठितमेव ज्योतिर्लिङ्गं नागेश्वरज्योतिर्लिङ्गप्रामाणिकम्।

## (11) सेतुबन्धे रामेशः (रामेश्वरलिङ्गम्)

एकादशं ज्योतिर्लिङ्गं सेतुबन्धरामेश्वरलिङ्गम्। मर्यादापुरुषोत्तमो भगवान् रामचन्द्रः स्वकरकमलद्वारा ज्योतिर्लिङ्गमिदं स्थापयामास। लङ्कामाक्रान्तुं गमनसमये श्रीरामचन्द्रः समुद्रतटे वालुकाभिः शिवलिङ्गं निर्माय पूजयाञ्चकार। इदमत्र श्रूयते यद् यदा रामचन्द्रो जलपानाय प्रवृत्तस्तदा आकाशवाणी जाता, भो रामचन्द्र! मम पूजां विना ते जलपानप्रवृत्तिर्न शोभते। ततश्च श्रीरामचन्द्रः शिवलिङ्गं विधाय पूजां कृत्वा रावणपराजयाशीर्वादमयाचिष्ट। सुप्रीतस्त्रिपुरारिः सहर्षं वरं प्रदाय सर्वेषां प्रार्थनया तत्र वासाय स्वीकृतिमददात्।

एतद्विषये अन्यदपीतिवृत्तं लभ्यते—

रावणस्य वधं कृत्वा भगवान् रामचन्द्रो यदा सीतया सह सदलबलः प्रत्यावर्तमानः समुद्रस्य द्वितीये पारे गन्धमादनपर्वते प्रथमं वासमकरोत्, तदैव मुनयस्तं स्तोतुं तत्रागमन् । श्रीरामश्च तान् सविधि सम्पूज्योवाच, यत् पुलस्त्यकुलनाशेन मम ब्रह्महत्यापापमभूत् । अतः कृपालवो भवन्तस्तत्पापप्रायश्चित्तं ब्रुवन्तु । मुनयो भगवद्वचनेनातिप्रीताः प्रशंसन्तो व्यवस्थामिमां निरणैषुर्यद् भवान् शिवलिङ्गस्थापनां कुर्यात्, तेन सर्वपापापनोदनं श्रीमतः स्यादिति । भगवान् रामचन्द्रः कैलासात् शिवलिङ्गमानेतु-माञ्जनेयमादिदेश, श्रीहनुमान् क्षणेनैव कैलासशिखरं गत्वा शिवादर्शने तप आधाय श्रीमहादेवदर्शने शिवप्रसादाल्लिङ्गमादाय श्रीरामचन्द्रसन्निधावाजगाम । इतः शुभमुहूर्तातिक्रमणभयाद् मुनिगणप्रार्थनया श्रीरामचन्द्रो ज्येष्ठशुक्लदशम्यां बुधे वालुकाशिवलिङ्गमेव प्रतिष्ठापयामास । एतदवलोक्य हनुमन्मनसि महान् क्षोभोऽभूत्, स्वप्रभुचरणयोश्च भक्त्या निपपात । भगवान् रामो वालुकालिङ्गस्थापनहेतुं निर्दिश्य तत्सन्तोषायावदद् यद् भवान् वालुकालिङ्गमुत्पाटय, तत्र त्वया नीतं लिङ्गं स्थापयामि । हनुमान् प्रसन्नः सन् तदुत्पातने प्रवृत्तोऽसमर्थोऽभूत् । हठात् स्वलाङ्गूलेन लिङ्गं सम्बध्य तदुत्पातने समग्रापि पृथिवी चकम्पे, लिङ्गन्तु स्वस्थानान्न चचाल; किन्तु हनुमानेव तेनाक्रान्तः क्रोशं गत्वा निपपात, तस्याङ्गेभ्यः रक्तपातो जातः । एतदवलोक्य श्रीरामादयो व्याकुला अभूवन् । श्रीसीताऽपि हस्तेन मारुतिनन्दनं स्पृशन्ती अरुदत् । विलम्बेन मूर्च्छा, तस्य व्यपगता सम्मुखासीनं श्रीरामचन्द्रं दृष्ट्वा तद्रूपं साक्षाद् ब्रह्मरूपमपश्यत् । आत्मग्लानिपूर्वकं भगवतश्चरणे पतन् अस्तावीत् । भगवान् हनुमन्तं सान्त्वयन् उवाच—त्वया त्रुटिः कृता यया इदं ते समुपस्थितम् । मया प्रतिष्ठापितां मूर्तिं न कोऽप्युत्पाटयितुं समर्थः । महादेवापराधेन तवेयं दशा । पश्चाच्च हनुमता आनीतां मूर्तिमपि भगवान् रामचन्द्रः पार्श्वे स्थापयामास, तल्लिङ्गस्य नाम हनुमदीश्वरेति जातम् । उभयोः महत्त्वविषये उक्तम्—

**"स्वयं हरेण दत्तन्तु हनुमन्नामकं स्वकम् ।**
**सम्पश्यन् रामनाथञ्च कृतकृत्यो भवेन्नरः ॥**
**योजनानां सहस्रेऽपि स्मृत्वा लिङ्गं हनूमतः ।**
**रामेश्वरनाथं चापि स्मृत्वा सायुज्यमाप्नुयात् ॥**
**तेनेष्टं सर्वयज्ञैश्च तपश्चाकारि कृत्स्नशः ।**
**येनेष्टौ महादेवौ हनुमद्राघवेश्वरौ ॥"**

**(स्क. पु. ब्र. ख. सं. मा. अ. 45)**

रामेश्वरमन्दिरं 1000 फुटेन लम्बितम्, 650 फुटचतुरस्रं 125 फुटोन्नतञ्च वर्तते । अस्मिन् विशाले मन्दिरे प्रधानमूर्त्यतिरिक्तानि अनेकानि मूर्तिजातानि सन्ति । नन्दी विशिष्टोऽपूर्वश्चास्ति । शङ्करपार्वत्योश्च चलमूर्ती वार्षिकशृङ्गारवेलायां स्वर्णरजतवाहनेन निस्सार्येते । मन्दिराभ्यन्तरे 24 कूपाः सन्ति, ये तीर्थानि कथ्यन्ते, एषु स्नानस्य महत्त्वमस्ति । सर्वेषां कूपानां जलानि मधुराणि सन्ति; किन्तु मन्दिराद् बहिर्वर्तमानानां कूपानां जलं क्षारमस्ति, श्रूयते यद् भगवतैव स्वयं स्वामोघबाणेनैते निर्मिताः । तथा च भगवानेव अनेकतीर्थेभ्यो जलान्यादाय एषु निचिक्षेप । गंगा-गया-यमुना-शंख-चक्रकुमुदादिनामभिरेते प्रसिद्धाः । श्रीरामेश्वरधाममध्ये दर्शनतीर्थमतिरिक्तमस्ति । एतेषु

केषाञ्चिन्नामानि इमानि सन्ति–रामतीर्थम्, अमृतवाटिकातीर्थम्, हनुमत्कुण्डम्, ब्रह्महत्यातीर्थम्, विभीषणतीर्थम्, माधवकुण्डम्, सेतुमाधवः, नन्दिकेश्वरतीर्थम्, अष्टलक्ष्मीमण्डपः, नलादिकुण्डानि च। गंगोत्तरी-गंगाजलमादाय श्रीरामेंश्वरार्पणेन महत्फलं लभ्यते। एतदर्थं तन्मूल्यमत्र दीयते।

श्रीरामेश्वरमन्दिरतः 15-20 मीले दूरे धनुष्कोटितीर्थं शोभते, यत्र भारतमहासागरबङ्गालखाड़ी इत्यनयोः संगमो वर्तते। अत्र श्राद्धकरणेन पुण्यमवाप्यते। रामेश्वरयात्रायां प्रथमतः मद्रासगमनम्। ततश्च साक्षाद् रेलयानं प्राप्यते।

## (12) शिवालये घुश्मेशः

घुश्मेश्वरलिङ्गं (घुसृणेश्वर-घृष्णेश्वर) निजामराज्ये मनमाड़स्टेशनतः 66 मीले दूरे दौलताबादस्टेशनमस्ति। ततः 12 मीले दूरे वेलगाँवसन्निधौ स्थानमिदं वर्तते। दौलताबादं विहाय आरङ्गाबादस्टेशने अवतरणं कार्यम्। यच्च दौलतबादतः अग्रिमस्टेशनमस्ति, मार्गे दौलताबादस्य दुर्गः मार्गश्च शोभनोऽस्ति। दौलताबाददुर्गः पर्वतशिखरे विराजते। धारेश्वरलिङ्गसन्निधौ एकनाथमहात्मनो गुरोः श्रीमतो जनार्दनमहाराजस्य समाधिर्वर्तते। अग्रे च इल्लोटाख्यस्य प्रसिद्धा गुहा वर्तन्ते। अस्य स्थापनेतिहासविषये एवं प्रसिद्धिः–

दक्षिणप्रदेशे देवगिरिसन्निधौ सुधर्मानामको ब्राह्मणः प्रतिवसति स्म। तस्य सुदेहा-नाम्नी पत्नी आसीत्। उभयोः परमा प्रीतिरभूत्, सुखेन च निवसतोस्तयोः सन्ततिचिन्ता समजायत। दैवज्ञैः सन्तानाभावयोगो घोषितः। कालक्रमेण ब्राह्मण इदं सर्वं पत्न्यै न्यवेदयत्। सुदेहा विवाहान्तरकरणाय आग्रहीत्। ब्राह्मणः पत्नीप्रीतिवशाद् विवाहतो न्यवारयत्; किन्तु सा साग्रहोवाच यत्–मदीया एका भगिनी घुश्मानाम्नी सुन्दरी गुणवती मत्समानस्वभावा चास्ति, तया साकं भवान् विवाहं करोतु। आवां सम्मिल्य भवतः सेवां करिष्यावः। दैवाद् घुश्मया सह विवाहविधिः समपद्यत। घुश्मा विवाहिता पतिसेवापरायणा साध्वीं स्वभगिनीं मातरमिव सेवमाना 101 पार्थिवार्चनेन शिवभक्ता अभूत्। भगवतः शिवस्य प्रसादेन घुश्मागर्भतः पुत्ररत्नमभूत्, तदानीम् उभयोः भगिन्योः मिथः प्रीत्यतिशयोऽभूत्। सुदेहायाश्चापि पुत्रस्योपरि मातृभाव आसीत्।

कालक्रमेण घुश्मायाः पुत्रस्य विवाहोऽभूत्। तस्य पत्नी गृहे समागता। क्रमशः सुदेहाया मनसि पुत्रं प्रति ईर्ष्याङ्कुरः समपद्यत। तन्मनसि इयमवधारणा जाता यदत्र गृहे मम किमपि नास्ति घुश्माया एव सर्वस्वमस्ति। तत्र मूलं पुत्र एवास्ति। घुश्मा च भक्त्या शिवार्चनतत्परा दिनानि यापयन्ती अतिष्ठत्। तस्याश्च भक्तिरहर्निशं ववृधे। इतः सुदेहा ईर्ष्याग्निना दग्धा पापाधिक्यवशादेकस्मिन् दिने पुत्रमारणोपायमचिन्तयत्। एकान्ते स्वपन्तं पुत्रं हत्वा यस्मिन् सरोवरे घुश्मा शिवलिङ्गानि पूजितानि त्यजति स्म, तस्मिन्नेव सरोवरे पुत्रशवं प्रक्षिप्तवती। पुत्रपत्नी यदा पतिशय्यामपश्यत् तदा तत्र रक्तस्रावः पत्यभावश्च तामपीडयत्। सा रोदनं चक्रे। घुश्मा तु शिवलिङ्गार्चनविधौ संलग्ना, पूजनानन्तरं लिङ्गानि तस्मिन्नेव सरोवरे प्रक्षिप्य स्वगृहमागवतवती। पार्थिवलिङ्गप्रपातप्रभावेण पुत्रः जीवितः स्वस्थः मातुः चरणयोः शिरो दत्त्वोवाच यत्–भो मातः, मृत्वाप्यहं पुनर्जीवितः तव पार्श्वे आगमम्। सुदेहायाः सन्निधावपि तथैवाचचार। इतो भगवान् शङ्करः सुदेहायाः कुकृत्यमवलोक्य कुपितः

सुदेहाविनाशाय समुद्यतोऽभूत् । कुपितं तथाचरन्तञ्च शिवमवलोक्य घुश्मा प्रार्थितवती यद् भगवन् ! यदि भवतः कृपा मयि स्यात्तदा अस्या अपराधं क्षमताम् । प्रसन्नो भगवान् तां तत्याज । घुश्माप्रार्थनया भगवान् शिवस्तत्र प्रतिष्ठितोऽभवत् । घुश्माप्रतिष्ठापितत्वेनास्य ज्योतिर्लिङ्गस्य नाम घुश्मेश्वरज्योतिर्लिङ्गमजायत । तत एव कालादिदं घुश्मेश्वरज्योतिर्लिङ्गं पुण्यकामैः पूज्यते, दृश्यते च अस्य महत्त्वं शास्त्रेषु बहुधा वर्णितम् । द्वादशज्योतिर्लिङ्गस्यायं संक्षिप्तः परिचयः सर्वसाधारणतया प्रदत्तः । एतद्विषये प्रमाणभूतानि तत्त्वानि शिवपुराणादौ बहुशो वर्तन्ते, इह विस्तरभयान्नोल्लिखितानि, इह तु दिग्दर्शनरूपेणैवोपन्यस्तम् । यद्यनेन कस्यचित् कोऽपि लाभः स्यात्तदा सन्तोष इति शम् ।

●

# जीवात्मपरमात्मनोरभेदविमर्शः

**प्रो. पारसनाथद्विवेदः**

इह जीवात्मा परमात्मनो विकारः, अंशः, भिन्नः, भिन्नाभिन्नः, अभिन्नो वेति विचार्यते।

अस्त्यात्मा जीवाख्यः शरीरेन्द्रियपञ्जराध्यक्षः कर्मफल-सम्बन्धी अहमिति प्रतीतिसाक्षिकश्चेतनः। अस्ति च परमात्मा जगज्जन्मादिहेतुः श्रुतिस्मृतीतिहासप्रमाणको योगिज्ञानगम्यश्चेतनो नित्यो विभुस्तत्र स जीवात्मा किं व्योमादिवत् परस्मादात्मन उत्पद्यते, उत ब्रह्मवदेव नोत्पद्यत इति श्रुतिविप्रतिपत्तेः संशयः। उभयथा हि श्रुतिः।

"यथा अग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्ति एवमेवास्मादात्मनः सर्वे प्राणा सर्व एत आत्मानो व्युच्चरन्ति"। (बृ. 1/20)

"यथा सुदीप्तात् पावकाद् विस्फुलिङ्गाः सहस्रशः सम्प्रभवन्ते सरूपाः। तथाक्षराद् विविधाः सौम्यभावाः प्रजायन्ते तत्र चैवापि यान्ति"। (मु. 2/1/1) इत्यादिश्रुतयः साक्षादेव जीवात्मनो ब्रह्म-विकारत्वं प्रतिपादयन्ति। सरूपाभावा इत्यनेन जीवानामपि उत्पत्तिप्रलयौ श्रुत्या प्रतिपाद्येते।

किञ्च, 'एकविज्ञानेन सर्वविज्ञानम्' इति प्रतिज्ञाया मृल्लोहमण्यादिदृष्टान्तस्य चास्मिन् पक्षेऽनुप-रोधोऽपि सम्भवति। एवं जीवस्योत्पत्तिः श्रूयते। अनुत्पत्तिरपि श्रूयते, यथा–

**"न जायते म्रियते वा विपश्चित्",**

**अविनाशी वा अरे अयमात्मा अनुच्छित्तिधर्मा"।**

स्मर्यते च–

**"अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे"।**

किं पुनरत्र ज्यायः ? जीवात्मा नोत्पद्यत इत्येव पक्षः साधीयान् श्रुतिसम्मतो युक्तश्च। बाहुल्येन श्रुतयस्तावज्जीवात्मनोऽनुत्पत्तिमेव श्रावयन्ति। अल्पाः श्रुतय उत्पत्तिं दर्शयन्ति। तासां नित्यत्व-श्रुत्यनुरोधेन बुद्ध्याद्युपाधिसम्बन्धाद् उत्पत्तिप्रलयप्रतिपादने गतार्थता स्यात्। उपपादितं चैतत्–

"चराचरव्यपाश्रयस्तु स्यात् तद्व्यपदेशो भाक्तस्तद्भावभावित्वात्" (ब्र. सू. 2/3/16) इति सूत्रे भगवत्पादैः। जीवस्य जन्ममरणव्यपदेशो भाक्त इति। शरीरादिप्रादुर्भावतिरोभावयोर्हि सतोर्जन्म-मरणशब्दौ तद्विषयौ मुख्यौ तत्रस्थे जीवे उपचर्येते, तद्भावभावित्वादिति भावः। न च शरीर-सम्बन्धादन्यत्र जीवो जातो मृतो वा केनचिद् लक्ष्यते। न च श्रूयते। श्रुतिरपि शरीरसम्बन्धादेवास्य

जन्ममरणे दर्शयति–"स वा अयं पुरुषो जायमानः शरीरमभिसम्बध्यमानः, स उत्क्रमन् म्रियमाणः" इति। (बृ. 4/3/8)

नित्यत्वाच्च जीवात्मन उत्पत्तिर्न सम्भवति। न हि उत्पन्नो नित्यः सम्भवति। श्रुतयस्तावत् शतशो जीवस्य नित्यत्वं प्रतिपादयन्त्यस्तदुत्पत्तिं वारयन्ति। यथा–

"न जीवो म्रियते" (छा. 6/11/3), **"स वा एष महान् अज आत्मा अजरोऽमरोऽमृतोऽभयो ब्रह्म"** (बृ. 4/4/25)।

**"अजो नित्यः शाश्वतोऽयं पुराणः"** (क. 2/8)।

किञ्च, ब्रह्मविकारो जीवात्मा इति मते जीवस्य कार्यत्वं ब्रह्मणश्च परिणामित्वमापद्येत। उभयथापि उभयोरनित्यत्वं दुर्वारम्। न च ब्रह्मणः परिणामि नित्यत्वं सम्भवति, विरोधात्। न हि परिणामी अविकृतः सम्भवति। न च विकृतो नित्यः सम्भवतीति! किञ्च, परमात्मपरिणामो जीव इति दर्शने कृत्स्नस्य ब्रह्मणः परिणामः, यत्किञ्चिदंशपरिणामो वा स्यात्। उभयथा दोषः। तथा हि कृत्स्नपरिणामो ब्रह्मणो न श्रूयते क्वचित्। तत् सम्भवे वा जीवस्यापि ब्रह्मवदेव सर्वज्ञत्वापत्तिः स्यात्। न च भूतसृष्टिरपि ब्रह्मपरिणामः, विवर्तवादस्वीकारात्। यत्किञ्चिदंशपरिणामे च ब्रह्मणः सावयवत्वापत्तिः, निष्कलं निष्क्रियं शान्तं निरवद्यमित्यादिनिरवयवत्वप्रतिपादकश्रुतिव्याकोपश्च। अंशित्वाच्च ब्रह्मणोऽनित्यत्वमिथ्यात्वापत्तिश्च स्यादिति। न च ब्रह्माश्रिताविद्यापरिणाम एव जीव इति युक्तम्, आकाशादिवज्जडत्वापत्तेः। एवञ्च न जीवात्मा ब्रह्मणो विकार इति सिद्धम्।

ननु मास्तु ब्रह्मणो विकारो जीवः, अंशस्तु सम्भवति अविकृतः। तथा च श्रूयते–"तावानस्य महिमा ज्यायाँश्च पूरुषः पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि" (छा. 3/12/6)। अत्र अंशः, पादः, भाग इति अनर्थान्तरम्। स्मर्यते च–

**"ममैवांशो जीवलोके जीवभूतः सनातनः"। (श्रीमद्भगवद्गीतायाम्–** 15/7)

वादरायणेनापि भगवता ब्रह्मसूत्रकृता उक्तम्–"अंशो नानाव्यपदेशाद् अन्यथा चापि दाशकितवादित्वमधीयते एके"। (ब्र. सू. 2/3/43)

अतो जीवः परमात्मनोंऽशो भवितुमर्हति, अग्नेर्विस्फुल्लिङ्गादिवत्, नानात्वेन व्यवहारात्। अत एव नैवेश्वर एव जीवात्मा। "सोऽन्वेष्टव्यः स विजिज्ञासितव्यः" (छा. 8/7/10), "एतमेव विदित्वा मुनिर्भवति", "य आत्मनि तिष्ठन्नात्मानं यमयति" इति चैवंजातीयको भेदनिर्देशो नासति भेदे युज्यते। अत उपकार्योपकारकत्वाच्च जीवात्मपरमात्मनोरंशांशिभावो युक्तः। अत्रोच्यते–निरवयवस्य परमात्मनो न मुख्योंऽशो जीवः सम्भवति, निरवयवत्वप्रतिपादकश्रुतिव्याकोपात्, अनित्यत्वमिथ्यात्वापत्तेश्च। यत्रापि परमात्मनोंऽशो जीव इति श्रूयते स्मर्यते वा, तत्र अंश इव अंश इति व्याख्येयम्। चैतन्याविशेषात्तु जीवे ब्रह्मांशत्वव्यपदेशः, न तु वस्तुतोंऽशः सम्भवति।

किञ्च, जीवस्य परमात्मनोंऽशत्वे जीवगतसुखदुःखादिवेदना ब्रह्मणोऽपि प्रसज्येत, पादादिगतवेदना इव देवदत्तस्य। तथा सति ब्रह्मभूयं गतस्यापि जीवस्य वेदनानुभवप्रसङ्गः स्यात्। किं वा अंशभूत-

समस्तजीवगतवेदना ब्रह्मणः प्रसक्तेति मुक्तात्मनो ब्रह्मीभूतस्य समस्तजीवगतवेदनाप्रसक्तिः स्यादिति, ततो वरमनिर्मोक्ष एव स्यात् ।

किञ्च, अस्मिन् पक्षे जीवब्रह्माभेदप्रतिपादकश्रुतयो बाध्येरन् "तत्त्वमसि", "अहं ब्रह्मास्मि" इत्येवमादयः । किञ्च, "तत् सृष्ट्वा तदेवानुप्राविशत्" (तै. 2/6/1) इत्यादिप्रवेशनश्रुतयोऽपि अंशवादे बाधिताः स्युः । परमात्मन एव स्वसृष्टभूतप्रवेशोऽविकृतरूपेण तत्रोपलब्धरूपप्रवेशनं श्रूयते । न च तत्रांशतः प्रवेशः श्रूयते, सम्भवति वा, निरंशत्वात् परमात्मनः । अतो नायं पक्षः श्रुतिस्मृतियुक्तिसह इति ।

ननु अस्तु तर्हि अत्यन्तं भेद एव जीवात्मपरमात्मनोः । न विकारो नाप्यंशः; किन्तु परमार्थतो भिन्न एव, जीवात्मपरमात्मनोः विकारत्वांशत्वाभिन्नत्वादेश्च औपाधिकत्वमस्तु । सति भेदे नानाव्यपदेशोऽपि सम्भवति । अल्पज्ञत्वसर्वज्ञत्वादिविलक्षणधर्माश्रयत्वमपि सुतरामुभयोः सिद्ध्यति । एवञ्च सति जीवात्मानमधिकृत्य न शास्त्रोपदेशवैयर्थ्यमपि । जिज्ञास्यजिज्ञासकोपास्योपासकभावादेरपि भेदेऽनभ्युपगम्यमाने सुतरामुपपत्तिः । न चोभयोर्भेदोऽप्रामाणिकः, श्रुतेरेव प्रमाणत्वात् । तथा च—"द्वा सुपर्णा सयुजा सखायौ समानं वृक्षं परिषस्वजाते", "य आत्मनि तिष्ठन्....आत्मानं यमयति", "पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततः स्यादमृतत्वमेति" इत्यादिभेदश्रुतयः सङ्गच्छन्ते । "निरञ्जनः साम्यमुपैति दिव्यम्" इत्यादिश्रुतिबोधितब्रह्मसमत्वरूपमोक्षोऽप्युपपद्यते । स्मृतिरपि—

**"द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।**
**क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥**
**उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः" ॥ इति ।**

किञ्च प्रतिक्षेत्रं भिन्नः अल्पज्ञोऽस्वतन्त्रः कर्मफलसङ्गी जीवः, न सर्वज्ञः स्वतन्त्र एकः कर्मफलासङ्गी परमात्मा भवितुमर्हति, विरोधात्, सर्वज्ञत्वसर्वेशितृत्वोपास्यत्वाद्यापत्तेः । अत एव न्यायवैशेषिकास्तार्किका औपनिषदाश्च माध्वादयोरुभयोर्भेदमेव साधयन्ति । याश्चाभेदवादिन्यः "तत्त्वमसि", "अहं ब्रह्मास्मि" इत्यादिश्रुतयस्ता उपचरितार्था एव । उपास्योपासकयोरत्यन्तसन्निधिवशात् ताभिरौपचारिक एवाभेदो बोध्यते, न वास्तविको भेदो निवार्यत इति भेद एव युक्तः, श्रुतिस्मृतिसिद्धश्च ।

अत्रोच्यते—भवेदयं पक्षो युक्तो यदि जीवात्मपरमात्मनोर्भेदः श्रुतितात्पर्यविषयः स्यात् । स एव तु नास्ति । तथा हि षड्विधतात्पर्यलिङ्गवत्यः सन्ति सहस्रशोऽभेदप्रतिपादिकाः श्रुतयः स्मृतयश्च, ताः पारमार्थिके भेदे स्वीक्रियमाणे उपरुध्येरन् । न च तादृश्यो भूयस्यो जीवात्मपरमात्माभेदतात्पर्यवत्यः श्रुतयो वर्षशतैरपि शक्रेणापि शक्या उपचरितार्थाः कर्त्तुम् । न च 'द्वा सुपर्णा' इत्यादिभेदबोधकश्रुत्यन्यथानुपपत्त्या ता उपचरितार्था इति वाच्यम्, औपाधिकभेदमादायापि भेदश्रुतीनां चारितार्थ्यात् । ताश्चाभेदश्रुतयः —

**"सदेव सोम्य इदमग्र आसीद् एकमेवाद्वितीयम्"** ( छा. 7/2/1 ),
**"आत्मैवेदं सर्वम्"** ( तत्रैव—6/25/2 ),
**"इदं सर्वं यदयमात्मा"**( बृ. 2/4/6 ),

"तत्त्वमसि" ( छा. 6/2/1 ),

"अयमात्मा ब्रह्म", "अहं ब्रह्मास्मि" इत्येवमादयः।

स्मृतयश्च–

"वासुदेवः सर्वमिति" । ( श्रीमद्भगवद्गीतायाम्–7/9 )

"समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम्" । ( तत्रैव–13/27 )

"क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत" । ( तत्रैव–13/2 )

न चाभेदमेव बोधयति श्रुतिर्भेदमपि निन्दति निषेधति च । यथा–"अन्यऽसौ अन्योऽहमस्मीति न स वेद यथा पशुः" (बृ. 1/4/10), "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" (बृ. 4/4/19), "यत्र नान्यत् पश्यति नान्यत् शृणोति नान्यद् विजानाति स वै भूमा" , "नान्योऽतोऽस्ति द्रष्टा श्रोता मन्ता विज्ञातेति" (बृ. 3/723) । अतो न भेदः श्रुतिस्मृतिसम्मतः ।

न चायं पक्षो युक्तिसहः । तथा हि–यदि जीवात्मा परमात्मनोऽत्यन्तं भिन्नोऽस्ति, तर्हि स किम् अणुर्वा देहपरिमाणो वा विभुर्वा ।

अणुश्चेत्, जीवात्ममहत्त्वप्रतिपादकश्रुतिविरोधः । "महान्तं विभुमात्मानं मत्वा धीरो न शोचति", "स एष महान् य आत्मा" । सर्वशरीरव्यापिवेदनानुपलब्धिप्रसङ्गश्च, तस्यात्मनः शरीरव्याप्त्यभावात् । त्वक्सम्बन्धात् स्यादिति चेत्, तर्हि पादे कण्टकतोडनेऽपि सकलशरीरगतवेदना प्रसज्येत । न च गङ्गादिस्नानलब्धसर्वशरीरव्यापिशैत्योपलब्धिवत् पादे कण्टकतोडने सर्वशरीरव्यापिवेदना अनुभूयते । न च एकदेशस्थोऽपि अणुरात्मा सर्वशरीरव्यापिशैत्यादिवेदनां करिष्यति । यथा एकदेशस्थश्चन्दनबिन्दुः सर्वशरीरव्यापिनमाह्लादं जनयतीति वाच्यम्, सावयवस्य चन्दनबिन्दोः अणुसञ्चारेण सर्वदेहव्याप्तिसम्भवेन तथोपपत्तेः । न च जीवात्मनः सावयवत्वे प्रमाणमस्ति । न चाणोरपि जीवस्य मणिप्रदीपवत् स्वगुणचैतन्येन सर्वशरीरव्यापित्वं सम्भवतीति वाच्यम्, निर्गुणस्य चैतन्यरूपस्य जीवात्मनश्चैतन्यगुणाङ्गीकारे प्रमाणाभावात् । अङ्गीकारे वा एकदेशस्थस्याणोरात्मनश्चैतन्यगुणस्यान्यत्र शरीरभागे व्याप्त्यभावात् । न हि गुणिनं विहाय गुणोऽन्यत्र दृष्टचरः । एवं सति गुणत्वमेव तस्य न स्यात् । न हि पटस्य शुक्लो गुणः पटव्यतिरेकेणान्यत्र वर्तमानो दृश्यते । न च गुणगुणिनो व्यतिरेको गन्धवद् द्रष्टव्यः । यथा गन्धगुणः स्वाश्रयं विहायान्यत्र वर्तमानो दृश्यते, तथात्मनश्चैतन्यगुणोऽपि वाच्यम्, पुष्पादेर्गन्धगुणस्यान्यत्र गमनाभावात्, गुणस्य निष्क्रियत्वाद् गमनासम्भवात् । पुष्पादेरणोरवयवस्यैवान्यत्र व्याप्त्यभ्युपगमात् । न च पुष्पाणां प्रक्षयः स्यादिति वाच्यम्, अदृष्टवशात् तदवयवानां पूरणात् तस्माज्जीवस्याणुत्वे सर्वशरीरव्यापिवेदनानुपलब्धिप्रसङ्गः स्यादेव । शरीरपरिमाणत्वे च तस्य विभुत्वप्रतिपादकश्रुतिविरोधः । शरीरपरिच्छेदाद् वस्तुतः परिच्छिन्नत्वाद् अनित्यत्वापत्तेश्च । न हि परिच्छिन्नं नित्यं दृष्टम्, शरीराणामनियतपरिमाणाच्चात्मनोऽपि अनियतपरिमाणापत्तेः । कदाचिद् हस्तिपरिमाणः, कदाचित् पिपीलिकापरिमाण इत्यस्तु तथेति चेत्, तर्हि मनुष्यपरिमाणो मृतः कदाचित् कर्मपरिपाकवशाद् हस्तिजन्म प्राप्नुवन् हस्तिशरीरं न कृत्स्नं व्याप्नुयात् । हस्तिपरिमाणो वा मृतो मशकादियोनिमाप्नुवन् मशकादिशरीरं न समीयेत । न चैतद्दोषपरिजिहीर्षया संकोचविकासशालित्वं शरीरानुरूपं तस्य

स्वीक्रियत इति वाच्यम्, अनित्यत्वापत्तेः। सङ्कोचोऽपचयः, विकास उपचयः, तौ च सावयवत्वेन व्याप्तौ जीवस्य सावयवत्वमापादयतः। तत्त्वे चानित्यत्वमापाद्यत एव। किञ्च, मोक्षावस्थायां निष्परिमाण एवात्मा स्यादिति नैतन्मतं युक्तम्।

विभुत्वपक्षेऽपि दोषः। तथा हि जीवात्मा परमात्मनो भिन्नो विभुः स्यात्, तर्हि किमेकोऽनेको वा? नाद्यः, तस्यैकत्वे सर्वलौकिकवैदिकभेदव्यवहारानुपपत्तिः। किञ्चैकस्मिन् जाते मृतेऽन्धे बधिरे वा सर्व एव तथा स्युः। भोगसाङ्कर्यापत्तिश्च स्यादिति अवश्यमनेके विभव आत्मानः स्वीकार्याः। तत्रापि कर्मफलव्यतिकररूपदोषापत्तिः। व्यतिकरः साङ्कर्यम्। तथा ह्यनेके विभव आत्मानश्चैतन्यरूपा निर्गुणा निरतिशयाश्च सन्ति। तदर्थं साधारणं प्रधानम्, तन्निमित्ता एषां भोगापवर्गसिद्धिरिति सांख्याः सङ्गिरन्ते।

काणादाश्च बहवो विभवः स्वतोऽचेतना द्रव्यमात्रस्वरूपा आत्मानः। तदुपकारीणि चाणूनि मनांसि अचेतनानि। तत्रात्मद्रव्याणां मनोद्रव्याणां च संयोगाद् नव ज्ञानादयो वैशेषिका गुणा उत्पद्यन्ते। ते चाव्यतिकरेण प्रत्येकम् आत्मसु समवयन्ति, स संसारः। तेषां नवानां गुणानामत्यन्तानुत्पादो मोक्ष इति प्राहुः।

तत्र सांख्यमते आत्मनां चैतन्यरूपत्वात् प्रधानेन सम्बन्धस्य सर्वान् प्रत्यविशेषाद् एकस्य तत्कृतो भोगः सर्वेषां प्राप्नोति। न च कर्मनिबन्धना व्यवस्था कर्मणां प्राकृतत्वेन प्रकृतेश्च साधारण्येन अव्यवस्थातादवस्थ्यात्।

काणादानामपि मते कर्मफलव्यतिकरः प्राप्नोति। तथा हि यदा एकेनात्मना मनः संयुज्यते, तदा आत्मान्तरैरपि स सम्बन्धो नान्तरीयकः, सन्निधानाविशेषात्। ततश्च मनःसंयोगरूपहेत्वविशेषात् फलाविशेषोऽवश्यंभावीति एकस्यात्मनः सुखदुःखे सर्वात्मनामपि प्राप्नुतः। न चादृष्टं नियामकमिति वाच्यम्, धर्माधर्मलक्षणस्यादृष्टस्य सांख्यमतेऽनात्मसमवायिनः प्रधानवर्त्तिनो नियामकत्वायोगात्, तस्य साधारण्यात्, तद्वृत्तिधर्माधर्मादीनामपि तथात्वात्। काणादानां मतेऽपि नादृष्टं नियामकम्। आत्ममनःसंयोगेन सर्वान् आत्मनः प्रति साधारण्येन उत्पन्नस्यादृष्टस्य प्रत्यात्मं नियामकत्वायोगात्। न हि साधारण्येन उत्पन्नमदृष्टमस्यैवात्मन इति विशेषतो वक्तुं नियन्तुं शक्नोति, हेत्वभावात्। न चात्ममनःसंयोगस्य साधारण्येऽपि स्वस्वामिभावस्यासाधारण्याद् विशेषव्यवस्था भविष्यतीति वाच्यम्, उक्तरीत्या हेत्वविशेषाद् अदृष्टस्य साधारण्यात् तत्कृतस्वस्वामिभावोऽपि साधारण इति न व्यवस्था भविष्यतीति कर्मफलव्यतिकरप्रसङ्गः स्यादेव। उपपादितञ्चैतद् भगवत्पादैः श्रीशङ्कराचार्यैः ब्रह्मसूत्रे द्वितीयाध्याये तृतीयपादान्ते। तस्मात् परमात्मनो भिन्नो जीवात्मा इति पक्षो दोषग्रंस्तत्वात् त्याज्य एव।

अस्तु तर्हि जीवात्मपरमात्मनोर्भेदाभेदपक्षः। तथा च सति न कापि श्रुतिर्बाधिता भवति। युज्यते च भेदमाश्रित्य नानाव्यपदेशः। अंशांशिभावश्च सुतरामुपपद्यते। अभेदमाश्रित्याभेदवादिन्यो निरंश-प्रतिपादिकाः श्रुतयः सङ्गच्छन्ते। प्रतिज्ञादृष्टान्तयोरपि अनुपरोधः सम्भवत्येव। उक्तञ्च—"प्रतिज्ञा-सिद्धेर्लिङ्गमाश्मरथ्यः" (ब्र.सू. 1/4/20) इति सूत्रे भाष्ये। तत्र हि यथा वह्नेर्विकारा विस्फुलिङ्गा

व्युच्चरन्तो न वह्नेरत्यन्तं भिद्यन्ते, तद्रूपनिरूपणत्वात् । नापि अत्यन्तमभिन्नाः, वह्नेरिव परस्परव्यावृत्त्यभावप्रसङ्गात् । तथा जीवात्मानोऽपि ब्रह्मविकारा ब्रह्मणोऽभिन्ना भिन्नाश्चेति । उपदेशवैयर्थ्यान्यथानुपपत्त्या भेदः, प्रतिज्ञासिद्ध्यन्यथानुपपत्त्या चाभेद इति युक्तम् ।

अथवा जीवेशयोर्भेदाभेदौ अवस्थापेक्षौ स्याताम् । आमुक्तेर्भेद एव स्यात्, जीवस्य च परस्य च, मुक्तस्य तु न भेदोऽस्ति भेदहेतोरभावत इति पाञ्चरात्रिकाः प्राहुः । श्रुतिश्च भवति अत्रार्थे—"एष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" । (छा. 8/12/3) यथा वा—

**"यथा नद्यः स्यन्दमानाः समुद्रे अस्तं गच्छन्ति नामरूपे विहाय ।**
**तथा विद्वान् नामरूपाद् विमुक्तः परात्परं पुरुषमुपैति दिव्यम्" ॥**

उपपादितञ्चैतद् भगवत्पादश्रीशङ्कराचार्यैरयं पक्षः—"उत्क्रमिष्यत एवं भावादित्यौडुलोमिः" (1/4/21) । एवञ्च भेदाभेदौ युक्तौ मन्तव्यौ ।

अत्रोच्यते—न तावत् तयोर्भेदाभेदौ पारमार्थिकावुपपद्येते, परस्परविरोधात् । भेदाभेदयोः परस्परमभावरूपत्वात् तमःप्रकाशवद् एकत्रायोगात् । एकत्र भिन्नो न पुनरवस्थान्तरेऽपि अभिन्नो भवन् क्वचिद् दृष्टः । तस्माज्जीवात्मा परमात्मनो न विकारः, नांशः, न भिन्नः, न भिन्नाभिन्नः; अपि तु अभिन्नस्तद्रूप एव, अभेदप्रतिपादकश्रुतिस्मृतीतिहासादिप्रमाणात् ।

न चाभेदपक्षे भेदव्यवहारो बाधितः, नामरूपोपाधिवशात् सर्वविधभेदव्यवहारोपपत्तेः । "एको देवः सर्वभूतेषु गूढः", "रूपं रूपं प्रतिरूपो बभूव", "एकधा बहुधा चैव दृश्यते जलचन्द्रवत्", "एकोऽहं बहु स्याम" इत्यादिश्रुतय एकत्वमेव दर्शयन्ति । अस्मिन् पक्षे प्रतिज्ञादृष्टान्तसर्वभूतप्रवेशनश्रुतयोऽपि आञ्जस्येन सङ्गता भवन्ति । विधिप्रतिषेधरूपानुज्ञापरिहारावपि देहसम्बन्धादेकस्मिन्नात्मनि उपपद्यन्ते । उपपादितञ्चैतत्—"अनुज्ञापरिहारौ देहसम्बन्धाज्ज्योतिरादिवत्" (ब्र. सू. 2/3/48) इति सूत्रे शारीरकभाष्ये । तत्र देहैः सम्बन्धो देहसम्बन्धः, स च न संयोगः समवायो वा सम्भवति नित्यस्यात्मनः असङ्गत्वश्रवणात् "असङ्गोऽयं पुरुषः" इति; अपि तु देहेनास्य तादात्म्याध्यास एव, तेन च विपरीतप्रत्ययोत्पत्तिः 'अहं स्थूलः' इत्यादिरूपा ।

न चैकत्वपक्षे अनुज्ञापरिहारयोरुपपन्नत्वेऽपि कर्मफलसम्बन्धो व्यतिकीर्येत स्वाम्येकत्वादिति वाच्यम्, असन्ततेश्च न कर्मफलव्यतिकरः । कर्त्तुर्भोक्तुश्चात्मनो न सर्वैः शरीरैः सह सम्बन्धोऽस्ति, उपाधितन्त्रत्वात् तस्य, उपाधेश्चासन्ततत्वाद् नास्ति जीवसन्तानः । तस्मात् कर्मफलव्यतिकरो नास्ति । तस्मादभेदपक्षे न दोषलेशोऽपि । स चाभेदस्तत्त्वमस्यादिवाक्यश्रवणमनननिदिध्यासनजन्याखण्डाकारमनोवृत्तिविशेषरूपोऽहं ब्रह्मास्मि अहं ब्रह्मास्मीति ।

●

# अनुमाने व्याप्तिः

**श्रीविश्वनाथमिश्रः**

मानाधीना मेयसिद्धिरिति सिद्धान्तानुसारं भवन्ति प्रमाणानि प्रमेयोपलब्धौ महत्त्वपूर्णसाधनानि। तानि च तत्तत्सम्प्रदायानुसारं भजन्ते वैभिन्न्यम्। तत्र प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानीति न्यायसूत्रानुसारमत्र चत्वार्येव प्रमाणानि। इदमत्रावधातव्यं यत्–न्यायदर्शने प्रमाकरणं प्रमाणञ्चेत्, जैनदर्शने प्रमितिः प्रमाणमिति भावव्युत्पत्त्या ज्ञानमेव प्रमाणम्। तत्र जैनदर्शने प्रत्यक्षं परोक्षञ्चेति ज्ञानस्य द्वैविध्यम्। अनुमानञ्चात्र परोक्षप्रमाणान्तर्गतमेव।

स्यादेतत्–स्युरिमानि ज्ञानजनकानि प्रमाणानि ज्ञानस्वरूपाणि वा, भवत्येवार्थावगतिः प्रमाणेभ्यः। तत्र प्रत्यक्षमिव अनुमानस्यापि अर्थसिद्धौ महदुपयोगित्वं वर्ततेऽनुभवप्रतिपन्नम्। "सम्बद्धं वर्तमानञ्च गृह्यते चक्षुरादिना" इत्यभियुक्तोक्त्यनुसारं सम्बद्धस्य=इन्द्रियसन्निकर्षसंश्लिष्टस्य, आसन्नस्य च स्थूल-वस्तुनः प्रत्यक्षं भवति चक्षुरादिना; किन्तु असम्बद्धस्यावर्तमानस्य दूरस्थस्य सूक्ष्मस्य च पदार्थस्य ज्ञानन्तु भवत्यनुमानेनैव। नास्ति तत्र प्रत्यक्षस्य क्षमत्वम्। स चासौ अनुमानशब्दः अनुमीयते येनेति करणव्युत्पत्त्या अनुमित्यात्मकज्ञानसाधनपरो भवति। यदा च बाहुलकाद् भावे ल्युट्, तदा अनुमिति-रनुमानमिति पश्चाद्वर्तिज्ञानपरम्। एकस्माद् ज्ञानात् परवर्तिज्ञानमनुमानमिति फलितोऽर्थः। एकञ्च तज्ज्ञानं प्रत्यक्षमेव। अत एव अथ तत्पूर्वकमनुमानमिति न्यायसूत्रस्य व्याख्यानावसरे तत्पूर्वकमिति पदस्य प्रत्यक्षपूर्वकमित्यर्थः कृतो वर्तते। एतेन प्रतीयते यदनुमानस्य स्वरूपसिद्धौ प्रत्यक्षस्य सहकारित्वं नान्तरीयकम्। कदाचिदागमोऽपि भवति अनुमानोपकारकः। आत्मनो नित्यत्वे आगमस्यैव वर्चस्वम्। अत एव वात्स्यायनेन प्रत्यक्षागमाश्रितमनुमानमिति व्याहृतं न्यायभाष्ये।

अनुमानस्योपयोगं न केवलं मनुष्या एव कुर्वन्ति; अपि तु पशवोऽप्यभ्युपयन्ति अनुमानम्। हरितघासं हस्ते दृष्ट्वा तच्चिखादयिषया भवति प्रवृत्तिस्तत्र गवादीनाम्। दण्डोद्यतकरं पुरुषं दृष्ट्वा–दण्डोऽयं मदनिष्टजनकः पूर्वानुभूतदण्डवदित्यनुमीय पलायते चासौ ततो गौः। अस्यां स्थितौ ये नाङ्गीकुर्वते अनुमानं प्रमाणत्वेन ते क इति त एव जानीयुः।

एतादृशस्य महत्त्वपूर्णस्य प्रमाणस्य नामान्तरं व्याप्तिज्ञानम्। तथा चोक्तं भाषापरिच्छेदे विश्वनाथेन–

व्यापारस्तु परामर्शः करणं व्याप्तिधीर्भवेत्।
अनुमायां ज्ञायमानं लिङ्गं तु करणं नहि॥

अनुमायाम्=अनुमितौ व्याप्तिधीः=ज्ञानं करणम् । करणञ्च भवति व्यापारवदिति किमत्र तदिति जिज्ञासायामुक्त-व्यापारस्तु परामर्शः । भवति हि व्याप्तिज्ञानजन्यत्वे सति व्याप्तिज्ञानजन्यानुमिति-जनकत्वेन परामर्शस्य व्यापारत्वम् । एवंरीत्या शक्यते वक्तुं निर्विवादं यदनुमित्यात्मके ज्ञाने व्याप्तिज्ञानस्यानिवार्यत्वमिति । व्याप्तिश्च केति प्रश्ने यद्यपि पुरः स्फुरन्ति नैकानि रूपाणि व्याप्तेस्तथापि सामान्यरूपेणेदमेवोच्यते यत् स्वाभाविकः सम्बन्धो व्याप्तिः । हेतुना सह साध्यस्य यः स्वाभाविकः सम्बद्धः स एव व्याप्तिः । अथवा "अविनाभावो व्याप्तिः" साध्यं विना=साध्याभाववति देशे हेतोरभावो व्याप्तिः । साध्याभावव्यापकाभावप्रतियोगित्वमिति यावत् । साध्यो वह्निः, साध्याभावो वह्न्यभावस्तद्- व्यापकीभूताभावो धूमाभावस्तत्प्रतियोगित्वं धूमे इति भवति समन्वयोऽत्र व्याप्तेः । इदमत्रावधेयं यत् साधनेन भवत्यनुमितिः साध्यस्य । साधनम्, हेतुः, लिङ्गं गमकञ्चेत्यादयः शब्दाः पर्यायवाचिनः । साध्यं व्यापकम्, साधनञ्च व्याप्यमिति स्थितिः । अत एव व्याप्येन व्यापकमनुमीयते । धूमोऽस्ति लिङ्गं वह्नेरिति भवत्यनुमितिर्वह्नेर्धूमात्; परन्तु एतत्कार्यार्थं पूर्वं वह्निधूमयोर्व्याप्तिग्रहः समपेक्षितः । स च भवति भूयः सहचारदर्शनेन । यथा पूर्वमुक्तमस्ति यदनुमानं प्रत्यक्षपूर्वकं भवति । अत एव धूमस्य प्रत्यक्षदर्शन एव वह्नेरनुमितिर्जायते । धूमद्वारा वह्नेर्ज्ञानमत एव भवति यतो धूमोऽस्ति वह्नेः साधनम् । वह्निधूमयोरयं साध्यसाधनभावः अविनाभावसम्बन्धोपर्याधृतः । यत्र धूमस्तत्राग्निः, यत्र वह्न्यभावस्तत्र धूमाभाव इति वर्तते तयोरविनाभावः ।

एतेनोपर्युक्तविवेचनेनेदं निश्चितं यद् धूमेन वह्नेरनुमितौ क्रियमाणायां तत्त्वद्वयं भवत्यपेक्षितम् । प्रथमन्तु पर्वते धूमस्यास्तित्वम् । द्वितीयन्तु वह्निना सह साहचर्यस्याविनाभावस्य वा ज्ञानम् । अत्र प्रथमं तत्त्वं पक्षधर्मतापदेनोच्यते । द्वितीयञ्च व्याप्तिरित्युच्यते । व्याप्तिश्च विशिष्टा आप्तिरेव । विशिष्टा आप्तिश्च विशिष्टः सम्बन्ध एव । असावेव भवति विशिष्टः सम्बन्धो यो न विच्छिद्यते, न वा व्यभिचरति कदाचन । एतादृशसम्बन्धश्चं लिङ्गलिङ्गिभावो गम्यगमकभावोऽथवा साध्यसाधनभाव-प्रभृतिविभिन्नशब्दैरभिलप्यते ।

इदमत्र बोध्यं यद् वह्निनिरूपितव्याप्त्याश्रयत्वाद् धूमो व्याप्यः, वह्निश्च व्यापकः । धूमस्यैव वह्निना सह नियतसम्बन्धो न तु वह्नेः सम्बन्धो धूमेन सह नियतः । कदाचित् तप्तायःपिण्डे धूमाभावेऽपि वह्नेः सत्त्वात् । एतद्विपरीतं यत्र धूमस्तत्र वह्निः, यत्र च वह्न्यभावस्तत्र धूमाभावः । प्रकारेणानेन स्पष्टं यद् धूमवह्न्योः सम्बन्धो नियतः । अतो धूमस्य व्याप्यत्वं सुनिश्चितम् । इदं धूमस्य व्याप्यत्वं पञ्चभिः रूपैर्गृह्यते । तानि च पञ्चरूपाणि–पक्षसत्त्वसपक्षसत्त्व-विपक्षव्यावृत्तत्वासत्प्रतिपक्षत्वाबाधितत्वरूपाणि । दृश्यते च धूमस्य पक्षे पर्वते सत्वम्, सपक्षे महानसे च सत्वम्-विपक्षे ह्रदे च व्यावृत्तत्व, मसत्प्रतिपक्षत्वमबाधितत्वञ्च । तस्मादेव कारणात् पञ्चरूपोपपन्ने हेतौ गृह्यते व्याप्तिः । तथा चोक्तं न्यायमञ्जर्यां जयन्तभट्टेन–

**पञ्चलक्षणकाल्लिङ्गाद् गृहीतान्नियमस्मृतेः ।**<br>
**परोक्षे लिङ्गिनि ज्ञानमनुमानं प्रचक्षते ॥**

इदं हेतोः पञ्चरूपोपपन्नत्वं प्रसिद्धव्यतिरेकिसाध्यके धूमादिहेतावेवोपलभ्यते । अप्रसिद्धव्यतिरेकि-पृथिव्यां यत्रेतरभेदः साध्यं भवति तत्र गन्धवत्वहेतौ तु सपक्षसत्त्वं नैव भवति, पृथिवीतरस्य कस्यापि गन्धाधिकरणस्याभावात् । अतस्तत्र हेतुश्चतू रूपोपपन्न एव भवति । इदं ज्ञेयं वाच्यत्वादित्यत्र वाच्यत्वस्य सर्वत्र वृत्तितया नास्ति कश्चन विपक्ष इति तत्रापि हेतोश्चतू रूपोपपन्नतैव भवति । एतादृशस्थले चतुर्भिः रूपैः सम्पन्नेनैव हेतुना जायतेऽनुमितिः । धूमादिस्थले तु पञ्चरूपोपपन्नेन हेतुना परोक्षस्य लिङ्गिनः साध्यस्य वह्न्यादेर्ज्ञानमनुमितिः ।

बौद्धकृतान्ते तु असिद्धविरुद्धानैकान्तिकत्वरूपहेत्वाभासनिराकरणार्थं हेतोः पक्षधर्मत्वं सपक्षसत्त्वं विपक्षाद्व्यावृत्तिरिति त्रैरूप्यमेव स्वीकृतमित्यन्यदेतत् ।

स चायं धूमो हेतुः अन्वयेन व्यतिरेकेण च व्याप्तिमान् सन् वह्निमनुमापयति । यत्र धूमस्तत्राग्नि-रित्यन्वयव्याप्तिः । यत्र वह्निर्नास्ति तत्र धूमोऽपि नास्तीति व्यतिरेकव्याप्तिः । इदं व्याप्तिद्वयमेव कुत्रचित् पूर्वोत्तरव्याप्तिशब्देनाप्युच्यते । या खल्वत्र अन्वयव्याप्तिः सैवोत्तरव्याप्तिः । तथा चोक्तं तर्कामृते–व्याप्तिश्च हेतुसमानाधिकरणात्यन्ताभावाप्रतियोगिसाध्यसामानाधिकरण्यम् । हेतुर्धूमस्तत्-समानाधिकरणोऽत्यन्ताभावः घटाभावस्तत् प्रतियोगी घटः, अप्रतियोगी वह्निरेव साध्यं तत् सामानाधि-करण्यं धूमे गतमिति धूमे वह्निनिरूपिता व्याप्तिः । अन्वयव्याप्तावपीदमेव भवति, यत्र धूमस्तत्र वह्निरिति । या खल्वत्र व्यतिरेकव्याप्तिः सा खल्वन्यत्र पूर्वव्याप्तिरित्युच्यते । पूर्वव्याप्तिं लक्षयतोक्तं भाषापरिच्छेदे–

**"व्याप्तिः साध्यवदन्यस्मिन्नसम्बन्ध उदाहृतः"** ।

साध्यवत्वावच्छिन्नप्रतियोगिताकभेदाधिकरणनिरूपितवृत्तित्वाभाव एव व्याप्तिः । "पर्वतो वह्निमान् धूमात्" अत्र वह्निमत्वावच्छिन्नप्रतियोगिताकभेदो वह्निमान् नेति प्रतीतिसाक्षिको भेदस्तदधिकरणजलह्रदनिरूपितवृत्तित्वाभावस्य धूमे सत्त्वेन भवत्येव समन्वयोऽत्र व्यतिरेकव्याप्तेः, यत्र वह्निर्नास्ति तत्र धूमोऽपि नास्तीति ।

उपर्युक्तविवेचनेनेदं स्पष्टं भवति यद् वह्निनिरूपिता व्याप्तिर्धूमे याति, अतो धूम एव व्याप्यो वह्निस्तु व्यापकः । जैनतार्किकेण माणिक्यनन्दिनाऽपि शब्दान्तरेणैतदेव व्याप्तिद्वयं समर्थितम् । उक्तञ्च तेन–

**इदमस्मिन् सत्येव भवत्यसति तु न भवत्येव ।**
**यथाग्नावेव धूमस्तदभावे न भवत्येवेति च ॥**

**( परीक्षामुखम्, 3/12 )**

सति अग्नौ धूमः, अग्न्यभावे च धूमाभावः । इदमेव व्याप्तिस्वरूपम् । इयं व्याप्तिरेव अविनाभावः, अन्यथानुपपत्तिर्वोच्यते । शब्दान्तरेणेयं व्याप्तिः, तथोपपत्तिः, अन्यथानुपपत्तिरिति शब्देनाप्युच्यते । साध्ये सति साधनसत्ता तथोपपत्तिः । साध्याभावे च साधनभावः अन्यथानुपपत्तिः । उदाहरणञ्चास्या वह्निधूमयोर्मध्ये प्रसिद्धमेव ।

इदमत्र बोध्यं यद् जैनदर्शने योऽविनाभावः स्वीकृतस्तस्यैव नामान्तरमन्यथानुपपत्तिः । अयञ्चाविनाभावः सहक्रमभाविनोः सहक्रमभावनियमः । एकसामग्र्यधीनयोः फलादिगतयोः रूपरसयोः, व्याप्यव्यापकयोश्च शिंशपात्ववृक्षत्वयोः, क्रमभाविनोः कृत्तिकोदयशकटोदययोर्मध्ये भवत्ययमविनाभावः । अत एव रजन्यामास्वाद्यमानाम्रादिफलरसात् तद्गतस्य रूपस्यानुमितिर्भवति । एवमेव शिंशपात्वेन वृक्षत्वस्य, तथा "उदेष्यति शकटः कृत्तिकोदयात्" इत्येवंरूपेण शकटोदयस्यानुमितिर्जायते । एवं रीत्या निश्चितान्यथानुपपत्तिरूपमेकलक्षणत्वं हेतोः स्वीकृत्य तस्य पञ्चरूपता त्रिरूपता वा निराकृताऽत्र । तदुक्तम्–

**अन्यथानुपपन्नत्वं यत्र तत्र त्रयेण किम् ।**
**नान्यथानुपपन्नत्वं यत्र तत्र त्रयेण किम् ॥**

**( प्रमाणमीमांसा )**

वह्नौ साध्ये धूमस्य पञ्चरूपोपपन्नता, रूपत्रयोपपन्नता वा अनावश्यिकी, यतो हि असिद्धस्य, विरुद्धस्य, व्यभिचरितस्य वा हेतोरविनाभावोऽन्यथानुपपत्तिर्वा भविष्यत्येव नेति अन्यथानुपपत्त्यैव सिद्धे हेतोस्त्रिरूपता, पञ्चरूपता वा अनङ्गीकरणीयैव; किन्तु कथनमिदं प्रतिभाति प्रौढिवादमात्रम् । कारणञ्चास्येदमस्ति यद् अविनाभावशब्दस्य प्रयोगो न केवलं जैनदर्शनोपज्ञोऽपि तु न्यायदर्शनेऽप्युपलभ्यतेऽयं प्रयोगः । तथा चोक्तं न्यायमञ्जर्याम्–

"सोऽयमेतेषु पञ्चसु लक्षणेषु अविनाभावो लिङ्गस्य परिसमाप्यते" इति । तात्पर्यमिदमस्यास्ति यद् हेतोः पञ्चरूपोपपन्नतैवाविनाभावस्तस्य । तस्मात् पञ्चरूपोपपन्नता अविनाभावश्चैकमेव वस्तु । अत एवाग्रे लिखितं जयन्तभट्टेन–

"विव्रियतां कोऽयं नियमो नाम, व्याप्तिः, अविनाभावो नियतसाहचर्यमित्यर्थः" इति । तस्मान्निश्चीयते यत् "व्याप्तिः, अविनाभावः, अन्यथानुपपत्तिः, नियतसाहचर्यम्" एते शब्दाः सन्ति समानार्थकाः । एतेषु वैभिन्न्यमुररीकृत्यायुक्तः खलु कश्चनाक्षेपः ।

एतद्व्याप्तिद्वयातिरिक्तं मीमांसादर्शने समविषमव्याप्त्योरपि संकेतः समुपलभ्यते । यदा भवति व्याप्यो व्यापकस्य समदेशवर्ती, समकालवर्ती च तदा तत्र समव्याप्तिः । यदा च व्याप्यो व्यापकस्य देशकालापेक्षया न्यूनदेशकालवर्ती भवति तदा तत्र विषमव्याप्तिः । तदुक्तम्–

**यो यस्य देशकालाभ्यां समो न्यूनोऽपि वा भवेत् ।**
**स व्याप्यो व्यापकस्तस्य समो वाभ्यधिकोऽपि वा ॥**
**व्याप्यस्य गमकत्वं च व्यापकं गम्यमिष्यते ।**
**तेन व्याप्ये गृहीतेऽर्थे व्यापकस्तस्य गृह्यते ॥**

**( मीमांसाश्लोकवार्तिकम्, अनु. 4-5 )**

अत्रावधारणीयं यद् व्यापकमेव व्याप्यस्य समदेशवर्ती, अधिकदेशवर्ती, अधिककालवर्ती वा भवति । तावतैव तस्य व्यापकता । व्याप्यस्तु नैवम् । तस्माद् व्याप्य एव गमको व्यापकन्तु गम्यमेवेति स्थितिः ।

**अन्तर्व्याप्तिर्बहिर्व्याप्तिश्च–**

उपर्युक्तव्याप्त्यातिरिक्तमन्तर्व्याप्तिर्बहिर्व्याप्तिश्चेत्यपि व्याप्तिद्वयं श्रूयते जैनन्याये । उक्तञ्च–

"पक्षीकृत एव विषये साधनस्य साध्येन व्याप्तिरन्तर्व्याप्तिः, अन्यत्र तु बहिर्व्याप्तिः" । (प्रमाण-नयतत्त्वालोकः, 3/38)

यत्र सपक्षाभावाद् बहिर्दृष्टान्तो न संभवति तादृशदृष्टान्ताभावस्थल एवान्तर्व्याप्तिर्भवति । "सर्वं क्षणिकं सत्त्वात्", "जीवच्छरीरं सात्मकं प्राणादिमत्वात्" इत्यादौ सर्वस्यैव पक्षत्वम्, तथा जीवच्छरीर-मात्रस्य पक्षत्वमित्युभयत्र दृष्टान्ताभावात् पक्षीकृत एव विषये साधनस्य सत्त्वस्य, प्राणादिमत्वस्य च क्षणिकत्वेन सात्मकत्वेन च साध्येन सह व्याप्तिर्वर्तते । अन्यत्र तु बहिर्व्याप्तिः । यथा–देशोऽयमग्निमान् धूमवत्वात् । यो यो धूमवान् स स अग्निमान् यथा महानसम् । अत्र पक्षीकृताद् देशाद् अन्यत्र महानसे साधनस्य धूमस्य साध्येन वह्निना सह व्याप्तिरस्ति । अनयोर्व्याप्त्योर्मध्येऽन्तर्व्याप्तेरेव प्रामुख्यम् । अत एवोक्तम्–

**अन्तर्व्याप्तावसिद्धायां बहिर्व्याप्तिरसाधनम् ।**
**साकल्येन विना व्याप्तिरन्तर्व्याप्त्या कथं भवेत् ॥**

(अकलंकसि. 5/15)

यदि नास्ति अन्तर्व्याप्तिस्तदा बहिर्व्याप्तिर्व्यर्थैव । यथा "स श्यामः तत्पुत्रत्वात्" । अत्र सत्यामपि बहिर्व्याप्तौ अन्तर्व्याप्तेरभावाद् न भवति श्यामत्वस्य साधकं तत्पुत्रत्वम् । "उदेष्यति शकटं, कृत्तिकोदयात्" इत्यत्र यद्यपि नास्ति बहिर्व्याप्तिस्तथापि साधनस्य साध्येन सह अन्तर्व्याप्त्या भवति गमकः कृत्तिकोदयः शकटोदयस्य ।

न्यायमञ्जर्यामपि अन्तर्व्याप्तिबहिर्व्याप्त्योश्चर्चा कृता वर्तते । अत्रत्यं विवेचनन्तु पूर्वोक्तविवेचनतः किमपि पार्थक्यमुपैति । पूर्वत्र तु अन्तर्व्याप्तौ बहिर्दृष्टान्ताभावोऽपेक्षितः; किन्तु अत्र तु अन्त-र्व्याप्तावपि दृष्टान्तोऽपेक्ष्यत एव । उक्तञ्च जयन्तभट्टेन–"सामान्यतो व्याप्तिर्गृहीता सती सिषाधयिषितसाध्यधर्म्यपेक्षायां सैवान्तर्व्याप्तिरुच्यते । यैव च नगलग्नाग्न्यनुमानसमये तद्व्यतिरिक्तकान्तारादिप्रदेशवर्तिनी बहिर्व्याप्तिरभूत् सैव कालान्तरे कान्तारवर्तिनि वह्नावनुमीयमाने अन्तर्व्याप्तिरवतिष्ठते" ।

(न्यायमंजरी, पृ. 102)

अस्यायं भावः–यदा पक्षाद् बहिर्दृष्टान्ते धूमे वह्निनिरूपिता व्याप्तिर्गृह्यते तदासौ बहिर्व्याप्तिः । यदा चासावेव पक्षे पर्वतादौ विद्यमाने धूमे गृह्यते तदासौ अन्तर्व्याप्तिः । नगलग्नाग्न्यनुमानसमये पर्वततो भिन्नस्थले वनादौ धूमे गृहीता या वह्निव्याप्तिरासीत्, सा एव कालान्तरे वने वह्न्यनुमितौ भवति अन्तर्व्याप्तिः । यथा जैनन्याये बहिर्दृष्टान्तरहिता अन्तर्व्याप्तिरुक्ता तथा नात्र । अत्र तु अन्त-र्व्याप्तावपि बहिर्दृष्टान्तोऽपेक्षित एव ।

उपर्युक्तविवेचनेन सिद्धमिदं यद् व्याप्तिर्यत्र तिष्ठति स खलु व्याप्य इत्युच्यते । वह्निधूमस्थले वह्निनिरूपिता व्याप्तिर्धूमे तिष्ठतीति धूमो व्याप्यो वह्निश्च व्यापकः । आचार्यधर्मकीर्तिना मान्यतेयम-न्यथा कृता । तेन तु व्याप्तिर्व्याप्यधर्मवद् व्यापकस्यापि धर्म इति प्रत्यपादि । तथा चोक्तं तेन–

**"व्याप्तिर्हि व्यापकस्य तत्र भाव एव। व्याप्यस्य वा तत्रैव भावः"।**

**( हेतुविनिश्चयः, पृ. 53 )**

**"तस्य पक्षधर्मस्य सतो व्याप्तिः—यो व्याप्नोति यश्च व्याप्यते तदुभयधर्मतया प्रतीतेः"।**

**( हेतुवि. टी. पृ. 17 )**

अस्यायं भावः—व्याप्ये सति व्यापकस्य भाव एव। अथवा व्यापके सत्येव व्याप्यस्य भावः। एतेन व्याप्तेरुभयधर्मत्वं स्पष्टमेव भवति। आचार्यधर्मकीर्तिमनुसरता आचार्यहेमचन्द्रेणापि व्याप्तिविषये एवमेव लिखितम्—

**"व्याप्तिर्व्यापकस्य व्याप्ये सति भाव एव, व्याप्यस्य वा तत्रैव भावः"।**

**( प्रमाणमीमांसा, सू. 6 )**

एवं व्याप्यव्यापकयोरुभयोः धर्मं प्रदर्श्य कथ्यते हेमचन्द्रेण यद् ःव्याप्यव्यापकधर्मसंकीर्तनन्तु [ व्याप्तेरुभयत्र तुल्यधर्मतया एकाकारप्रतीतिर्माभूदिति प्रदर्शनार्थम्। पूर्वत्र व्यापकधर्मस्थलेऽयोगव्यवच्छेदेनावधारणम्। उत्तरत्रान्ययोगव्यवच्छेदेनेति कुत उभयत्रैकाकारताव्याप्तेः। तात्पर्यमिदं यद् व्याप्यस्थले व्यापकेनावश्यमेव स्थेयम्। व्याप्यस्तु तत्रैव तिष्ठेद् यत्र व्यापकस्य सत्ता स्यान्नान्यत्र।

स्यादेतत्—उभयधर्मसम्पन्नायां व्याप्तौ, तदाश्रयस्य व्याप्यत्वाद् धूमवह्न्योरुभयोरपि व्याप्यत्वं समापतितं कथं निराकृतं भविष्यतीति आलोचनपथमानीयमानो विषयः।



# को योगः कश्च योगी

**प्रो. रामजीमालवीयः**

सम्पूर्णानन्दनामा स्मरहरनगरे कर्मयोगी गरिष्ठ-
श्चित्ते काये तदीये विमलविभवता कर्मयोगैकधन्या ।
ग्रन्थे रत्ने वरिष्ठे स्मृतिपदमहिते लेखमाला मदीया
सम्पूर्णानन्दचित्तं हरतु विजयिनी योगकौशल्यमाप्ता ॥ 1 ॥
भुक्तेश्च मुक्तेर्महनीयहेतुं शास्त्रोक्तयोगं ब्रुवते यतीशाः ।
तच्चिन्तकाः साधकतामुपेताः संसारसेतुं सहसा तरन्ति ॥ 2 ॥
के योगिनो योगधराधराये का योगभूतिः प्रथिता पृथिव्याम् ।
शास्त्रोक्तरीतिं परिचिन्त्य बुद्ध्या कुर्वे प्रयत्नं झटिति प्रचेतुम् ॥ 3 ॥
अन्वेषणे तत्त्ववरस्य नूनं प्रेक्षावतां भिन्नधियां नितान्तम् ।
दृष्टिप्रभेदो भवतीति पन्थास्तत्रापि भण्यो न विगर्हणीयः ॥ 4 ॥
सारस्वतेयाः सततं सयत्ना गृह्णन्ति सारं सरसा वचोऽब्धेः ।
तद्योगतन्त्रस्य विमृश्य सारं प्रस्तौमि योगाकलनैकतत्त्वम् ॥ 5 ॥
प्रस्तावितं मे लघुकायपक्षं बुद्ध्वैव दोषो नितरां प्रदेयः ।
जातावबोधो न दुनोति चेतः कालोऽन्यथा यास्यति सूरिदोषः ॥ 6 ॥
तन्मामकीनैव विचारमूर्तिः शास्त्रैकदृष्टिर्भवतां पुरस्तात् ।
प्रस्तूयमाना विदुषां मुदे वः संरातु मोदं हितदा धरित्र्याम् ॥ 7 ॥
योगो योगी च तन्त्रे वरवचनधरे गीयते तान्त्रिकैः कः ।
संक्षेपेणैव बन्धेऽवनिबुधकलितो लिख्यते लेखलक्ष्म्याः ।
तन्त्राणां तन्त्रगाणां सुकृततततिभृतामूहितो धन्यधन्यः
सम्पूर्णानन्दपीठे विभुमतिविभवे मालवीयेन भव्ये ॥ 8 ॥

"अयं हि परमो धर्मो यद्योगेनात्मदर्शनम्" इत्युपदेशो मायामलावृतानां संसारार्णवपतितानां समुद्धारणायैवोपदिष्टः । कोऽसौ योगः ? येनाचरितेनात्मदर्शनं परमो धर्मः स्यादिति वक्ष्यते—

"योगश्चित्तवृत्तिनिरोधः",[1] "जीवात्मनोरैक्यं योगः"[2], "योगः कर्मसु कौशलम्"[3], "सम्बन्धविशेषे योगः", "योगः अस्त्रशस्त्रधारणेऽपि", "योगोपायः"[4] इति । सन्त्यन्येऽपि बहवो भेदा योगज्ञानविषये; किन्तु सामान्यतया 'योग' इति शब्दोच्चारणमात्रेण किमभिव्यज्यते ? मुमुक्षवः कौतूहलतया कमनुधावन्तो

दृष्यन्ते ? कं योगं प्राप्य ते आत्मानं धन्यधन्यं कृतकृत्यमिति मत्वा चिदानन्दमनुभवन्ति ? लोके शास्त्रे व्यवहारे च को (योगः) रूढिं गतः ? इत्थं प्रश्नव्रातस्योपस्थिते **"योगश्चित्तवृत्तिनिरोधः"** इत्येव व्यापकतया वक्तुं शक्यते । तदेव शास्त्रान्तर इत्थं वर्णितमुपलभ्यते । तदुक्तम्–

**आत्मप्रयत्नसापेक्षा विशिष्टा या मनोगतिः ।**
**तस्या ब्रह्मणि संयोगो योग इत्यभिधीयते[5] ॥**

विवेकमार्तण्डीये–

**योगं चात्र प्रवक्ष्यामि योगं चाष्टाङ्गसंयुतम् ।**
**संयोगं योगमित्याहुः क्षेत्रज्ञपरमात्मनोः ॥**

अतो जीवात्मनोरैक्यमेवात्मज्ञानम्, 'आत्मज्ञानान्मोक्षः', चतुर्विध-पुरुषार्थेषु मोक्षस्यैव श्रेष्ठत्वात्, स एव प्राप्तव्यस्तदर्थं श्रुतिरपि–"आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यश्चेति" निर्दिशति । आत्मोपनिषदि–"अथ परमात्मनाम यथाक्षरमुपासनीयम् । स च प्राणायाम-प्रत्याहार-धारणा-ध्यान-समाधियोगानुमानाध्यात्मचिन्तकवटकणिकावाश्यामाकतण्डुलो वा बालाग्रशतसाहस्रकल्पनादिभिः स लभ्यते" । मुण्डकोपनिषदि–"कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति ? इति । तस्मै स होवाच–द्वे विद्ये वेदितव्ये इति ह स्म यद्ब्रह्मविदो वदन्ति । परा चैवापरा च । तत्रापरा–ऋग्वेदो यजुर्वेदः सामवेदो ब्रह्मवेदः शिक्षा कल्पो व्याकरणं छन्दो ज्यौतिषम् इतिहास-पुराण-न्याय-मीमांसा-धर्म-शास्त्राणीति । परा–यया तदक्षरमधिगम्यत इति" । यदक्षरं यया प्राप्यत इत्युक्तं योगविद्यैव । कथम् ? श्रुतिस्मृतिपुराणादिसर्वविद्यानामपरविद्यायामेवोक्तत्वाद्योगविद्यायाश्चानुक्तत्वात् पृथक्त्वमर्थात् सिद्धम् ।

अन्यत्रापि–

**ऋचो यजूंषि सामानि वेदोपनिषदस्तथा ।**
**योगज्ञानादवाप्नोति ब्राह्मणोऽध्यात्मचिन्तकः ॥**
**एतत्ते कथितं ज्ञानं योगं चेमं निबोध मे ।**
**यं प्राप्य ब्राह्मणो योगी शाश्वतान्नान्यतां व्रजेत् ॥**

अन्यच्च–

**"योगी युञ्जीत सततं योगमात्मविशुद्धये" ।**

आत्मनो जीवरूपस्य विशुद्धये–**योगतन्त्रेषु सर्वेषु शस्यते योगिना सदा"** इति योगतन्त्रे वर्णितम्–

**घृणा शङ्का भयं लज्जा जुगुप्सा चेति पञ्चमी ।**
**कुलं शीलञ्च जातिश्चेत्यष्टौ पाशाः प्रकीर्तिताः ॥**

इति कुलार्णववचनादित्थंभूतैरष्टपाशजालैर्मुक्ताऽवस्था एव विशुद्धिस्तदर्थमेव योग आश्रयणीयः । स च योगो ज्ञानपरकाणां क्रियापरकाणां वा उभयविधामापद्यमानानां कृते मार्ग्यः आस्थेयश्च । कथमिति–"न अविरतो दुश्चरितात्, न अशान्तो न असमाहितः, न अशान्तमानसो वाऽपि प्रज्ञानेनैनमवाप्नुयात्" इति । क्रियापरकाणां कृते–

यदुद्धरति वायुश्च धारणाशक्तिरेव च ।
तन्मन्त्रं वर्धयित्वा प्राणायामं समाचरेत् ॥
प्राणायामात्परं नास्ति पापराशिक्षयाय च ।
सर्वपापक्षये जाते किन्न सिद्ध्यति भूतले ॥
प्राणवायुं महोग्रन्तु महत्तेजोमयं परम् ।
प्राणायामेन जित्वा च योगी मत्तगजो यथा ॥
प्राणायामं विना नाथ ! कुत्र सिद्धो भवेन्नरः ।
सर्वसिद्धिक्रियासारः प्राणायामः परः स्मृतः ॥
प्रामायामं त्रिवेणीस्थं यः करोति मुहुर्मुहुः ।
तस्याष्टाङ्गसमृद्धिः स्याद्योगिनां योगवल्लभः ॥
एतत्क्रियादर्शनेन ज्ञानी भवति साधकः ।
ज्ञानादेव हि मोक्षः स्यान्मोक्षः समाधिसाधनः ॥
त्रैलोक्यातीतशास्त्राणि योगाङ्गविविधानि च ।
योगशास्त्रात्परं शास्त्रं त्रैलोक्ये नापि वर्तते ॥
योगशास्त्रप्रकारेण सर्वे वै भैरवाः स्मृताः ।
योगयोगाद् भवेन्मोक्षो मन्त्रसिद्धिरखण्डिता ॥
एतत्समाधिमाकृत्य योगी योगान्वितो भवेत् ।
प्रपश्यति महायोगी समाध्यष्टाङ्गलक्षणैः ॥
संयोगसिद्धिमात्रेण समाधिस्थं महाजनम् ।
समाधिः समतावस्था जीवात्मपरमात्मनोः[6] ॥

योगस्यैव वैशिष्ट्यं सर्वत्र तन्त्रेषु यथोचितं वर्णितं विविधक्रियाकलापसिद्धान्तोपायादिरूपेण प्रपञ्च्यते । योगस्य प्राधान्यं तु समाधावेव । समाधिस्तु वृत्तिशून्यस्य चित्तस्य अवस्थाविशेषः । उपस्थीयते सर्वात्मना बुद्ध्यते प्राप्यते वा स्थितिक्रमः यस्यां सेति व्युत्पत्तेः । "ष्ठा गतिनिवृत्तौ" इति धातोर्गतेः चतुर्ष्वर्थेष्वपुनरावृत्तिरूपार्थस्यैवात्र इष्टत्वात् । योगः समाधिः । "युज समाधौ" इति धातोर्घञि व्युत्पन्नः समाध्यर्थको योगो लोके चिरात्प्रथितः । योगो मोक्षकारणतया विहितः । "योगो वृत्तिनिरोधो मोक्षोऽपि" । स योगः किं स्वरूपः, किमुपायः, कथं वा ज्ञानमोक्षयोः कारणमित्यादि मुमुक्षूणां कृते जिज्ञासितम् । मत्वर्थीयोऽच् । सांख्यब्रह्ममीमांसादिषु च ज्ञानमेव भूयिष्ठतया विवेचितम्, ज्ञानसाधन-मात्रस्तु योगः सङ्क्षेपतः; किन्तु ज्ञानजन्ययोगस्तु तत्र सङ्क्षेपेणापि नोपपादितः । अतो भगवता पतञ्जलिना लोकहिताय स्वशिष्यावबोधायासम्प्रज्ञातसम्प्रज्ञात-समाधिनाम्ना अतिविस्तरेण द्विविधो योगः प्रतिपादितः । सर्वासां वृत्तीनां निरोधे जाते असम्प्रज्ञातः समाधिरुत्पद्यते । सम्प्रज्ञातकालिकी साक्षात्काररूपिणी या वृत्तिस्तस्या अपि परवैराग्येण निरोधे जाते असम्प्रज्ञातयोग इति तदर्थः । क्षिप्तं मूढं विक्षिप्तमेकाग्रं निरुद्धमपि चित्तस्य पञ्च वृत्तयः । एता वृत्तय एव मधुमती, मधुप्रतीका, विशोका,

संस्कारशेषा इति चतुर्धा चित्तभूमिपदेनाप्युच्यन्ते । तासु सर्वासु विदितः सार्वभौमः चित्तस्य धर्मः, तन्निरोधलक्षणो योगः । योगाङ्गेष्वष्टस्वन्यतमः समाधिस्तु न विरुद्धलक्षणः, अतो योगः अङ्गी समाधिस्तु अङ्गम् । योगः सामाधिरिति प्रयोगस्तु अङ्गाङ्गिनोरभेदविवक्षया । योगशब्दस्य ऽप्रवृत्तिनिमित्तान्यष्टौ योगाङ्गानि । एभिर्निरुद्धं चित्तं परमार्थतया योगपर्यायतया व्यपदिश्यते । चित्तं बुद्ध्युपलक्षणीभूतम् । वृत्तिनिरोधश्च चित्तस्य वृत्तिसंस्कारशेषावस्था, सा च संस्कारमात्रैः परिणामधारा, निरोधकाले संस्कारन्यूनाधिक्येन चित्तस्य परिणामसद्भावात् । एकाग्रे चेतसि विद्यमानमर्थं प्रकाशयति, क्लेशानपसारयति, कर्मबन्धनानि दूरीकरोति, निरोधमभिमुखं स्थापयति यः स सम्प्रज्ञातो योगः । यथा–

'वितर्कविचारानन्दास्मितारूपानुगमात् सम्प्रज्ञातः'[7] इति । आभ्यामेव द्वाभ्यां जीवात्मनोरैक्यं सम्पद्यते । युज्यते सम्बध्यते अनेन इति योगशब्दस्य करणव्युत्पत्त्या 'युजिर् योगे' इति धात्वर्थ-सम्बन्धाच्च योगः संयोगात्मक एव गृहीतव्यः । शिव-शक्तिसंयोगः, प्रकृति-पुरुषयोगः, जीवात्म-संयोग इत्यादिष्वनादिपरम्परया व्यवहारपथमागच्छति । एतेन इदं सुस्फुटं निश्चेतुं शक्यते यद् यस्यां स्थितौ येनोपायेन यस्माद् गुरोः सकाशाद् यस्मिन् काले यस्मात् कस्मात् सम्बन्धाद् जीवात्मसंयोगः संघटेत संघटते वा स एव उपायः, सा स्थितिः योगपदनाम्ना अभिधातुं युज्यते, युक्तं चैतत् कालविशेषे, स्थिति-विशेषे, उपायविशेषे, उपदेष्टृविशेषे वा चिरकालं संसारार्णवभ्रान्तस्य अनेकजन्ममरणचक्रसन्तप्तस्य धन्यधन्या दशा आगच्छेच्चेत्, परमात्मना योगो भवेन्नाम । न हि अनाप्तपुण्यस्य निष्कलङ्कस्य जीवस्य पुण्यातिरेकं विना स्वस्वरूपावाप्तिर्भवति । अतो योगशब्दस्य संयोगार्थकात्मत्वे न कापि संशीति-रुद्भावनीया । "योगश्चित्तवृत्तिनिरोधः" इति योगसूत्रपरिभाषापरिगृहीतयोगशब्दार्थनिरूपणपूर्वकं मोक्षार्थकत्वमपि भास्कररायेण प्रदर्शितम् । अतो योगशब्दस्य प्रकृतिप्रत्ययजन्यार्थनिरूपणेन न कोऽपि लाभः; अपि तु पारिभाषिकमोक्षार्थनिरूपणमेव श्रेयस्करम् । एतादृशयोगस्यैव उत्कृष्टार्थपरकत्व-मालक्ष्य जनेषु योगिविषये योगविषये च उत्कृष्टादरः । अतो योगशब्दस्य योजनमेवार्थः । जीवश्चैतन्यस्वरूपः, अनाद्यविद्यावशात् परब्रह्माभिन्नपरमात्मनः पार्थक्यमवाप । तदिदं पार्थक्यं दूरीकृत्य तस्य प्रातिस्विकस्वरूपे पुनः संस्थापनमेव योगो नाम । जीवात्मनोर्योजनमेव योगः । तदुक्तं देवीभागवते–

**न योगो नभसः पृष्ठे न भूमौ न रसातले ।**
**ऐक्यं जीवात्मनोराहुर्योगं योगविशारदाः ॥**

जीवात्म-परमात्मनोर्योजनं मुक्तावेव सम्भवम् । तस्माद्योगशब्दस्य मुक्तिरेवार्थः पारिभाषिको वेदशास्त्रानुमतो निर्धारणीयः । पातञ्जलयोगदर्शने यमादिसमाध्यन्ताष्टावङ्गानि योगस्य निर्णीय समाधि-साधन-विभूति-कैवल्यनामभिश्चतुर्भिरध्यायैः योगस्य महत्त्वं स्वरूपं साधनं फलञ्च उक्तम् । सर्वत्रापि योगप्रतिपादकदर्शने शरीरमनसोः परिष्कारनिरूपणपूर्वकं कैवल्यावाप्तिः समुद्भाविता । पौराणिक-वाङ्मयेऽपि प्राणायामादिसमाध्यन्ततत्तदङ्गानां वर्णनं यत्र तत्र समुपबृंहितं महद्बलमाधाय निर्दिष्टञ्च विद्यते । अनन्तरं शैव-शाक्त-वैष्णव-जैन-बौद्धागमेषु यमनियमासनानां परिहारेण अवशिष्टपञ्चाङ्गैः सह ऊह-तर्क-अभिवीक्षण-वीक्षण-अनुस्मृतिनामभिः षष्ठाङ्गस्य कल्पनां कृत्वा योगस्य षडङ्गान्येव

निर्धारितानि । पातञ्जलदर्शने यमनियमयोः प्रत्येकं पञ्चधात्वम्, स्मृतिषु च प्रत्येकं दशधात्वं वर्णितम् । यमानां नियमानां परिपालनेन मानवबुद्ध्यहङ्कारमनसां प्रक्षालनं परिष्करणं शक्यसम्भवं दृश्यते, एतेषां परिहारेण मानवसुलभसद्गुणानां सदाचाराणां वृत्तिपरिष्काराणाञ्च महान् अभावो यद्यपि क्षोभकारक एव, तथापि बुद्धितत्त्वसमीक्षकैः प्रत्याहारध्यानसत्तर्कापरपर्यायात्मशोधननिरतैः बुद्धितत्त्वस्य सर्वातिशायि-महत्त्वप्रेक्षावद्भिर्मनोवृत्तौ सर्वाधिकं बलमाधाय सुमहदुपकृतम् । दृश्यते हि लोके सदाचारपरायणाः परिस्थितिवशाद् अतथाकुर्वद्भिः घोरं जुगुप्स्यन्ते । पारस्परिकं सामञ्जस्यं सौहार्दं सद्भावं तु कुर्वन्त्येव, न हि जुगुप्सामूलतया असद्व्यवहरन्ति, अमानवतामाचरन्ति, दुःस्थितिमुत्पादयन्ति, मानवं दानवं प्रपश्यन्ति, निरर्थकमाचारपालनेन कालयापनं कुर्वन्तोऽपि स्वीयैरेव अन्यैर्बन्धुभिः सह प्राणापहारि-शत्रुभिरिव व्यवहरन्ति । एतेन देशस्य, जातेः, कुलानां महदनिष्टं सम्प्रवर्तयन्ति । एतां दुरवस्थां प्रसमीक्ष्य दूरदृष्टिभिः लोकसंग्राहकैः मानवतासंरक्षकैः आचारस्थाने बुद्धिव्यायामस्य ध्यानधारणादेः महत्त्वं समुपबृंहितम् । बुद्धौ साम्येन पारस्परिकं सौहार्दं संवर्ध्यते, सौमनस्यञ्च संस्थाप्यते । अतो योगस्य षडङ्गान्येव समाचर्य भौतिकजीवनसुव्यवस्थासंस्थापनपूर्वमाध्यात्मिकं महत्त्वमधिगन्तुं समुत्सहन्ते साधकाः । यथोक्तं भगवद्गीतायाम्–

'बुद्धौ शरणमन्विच्छ' बहुज्ञ एव कस्यचन अर्थस्य निर्णये प्रभवति नाल्पज्ञः । बहुज्ञतासमर्जनाय उत्कृष्टबुद्धितत्त्वस्य अपेक्षितता प्रेक्षावद्भिः समर्थितैव । हेयोपादेयभेदेन ज्ञानस्य द्वैविध्यं प्रतिपादयन् भगवान् शिवः शाङ्करे योगे दीक्षां विना अधिकारित्वं निरस्य क्रियाज्ञानभेदेन योगस्य द्वैविध्यं संस्थाप्य सबीजयोगसंसिद्ध्यै मन्त्रलक्षणमभिहितवान् । एतेन कल्प्यते क्रियायोग-ज्ञानयोगभेदेन द्विप्रकारकौ योगौ अभीष्टौ । ज्ञानञ्च श्रुत-चिन्तामय-भावनामयभेदेन त्रिविधम् । एतेन त्रिविधज्ञानेन योग उत्पद्यते । योगिनां हितं विचिन्त्यैव अन्यत् किमपि कर्तव्यमिति मालिनीविजयोत्तरतन्त्रस्याभिमतम्–योगिमहायोगियोगिकुलादिशब्देन योगस्य महत्त्वमपि सर्वातिशायि उक्ततन्त्रेण समर्थ्यते ।

अत्र योगतन्त्रदर्शने नादबिन्दुमयं पर्यायेण मूलतत्त्वं स्वीकृत्य तत एव शब्दराशिमयस्य विश्वस्य जगतः आविर्भावः स्वीक्रियते । तेनैव इदं शब्दार्थरूपं चराचरात्मकं जडजङ्गमात्मकं जगदभिव्यज्यते । तस्मादेव नादापरपर्यायाद्बिन्दुपरपर्यायाद्वा ब्रह्मणः सकाशात् पञ्चाशदर्णाः क्रमान्निर्गच्छन्ति । निर्गच्छन्तोऽपि ते युगपदेव स्वस्मिन् समाविशन्ति च, तदेव केचन शब्द-ब्रह्मेत्यूचिरे, तदेवान्तर्गतं चैतन्यं शब्दब्रह्मात्मकमात्मविवर्तरूपं सकलं जगत् सृष्ट्वा पुनः स्वाभिन्नस्वातन्त्र्यशक्त्या स्वस्मिन् विलापयति इति निरन्तरं सृष्टिसंहारयोः क्रमः प्रचलति । यथा शारदातिलके–

**नित्यानन्दवपुर्निरन्तर्गलत्पञ्चाशदर्णैः क्रमाद्**
**व्याप्तं येन चराचरात्मकमिदं शब्दार्थरूपञ्जगत् ।**
**शब्दब्रह्म यदूचिरे सुकृतिनश्चैतन्यमन्तर्गतं**
**तद्वोऽव्यादनिशं शशाङ्कसदनं वाचामधीशं महः ॥**

पुरुषार्थचतुष्टयमेव जगज्जातं जीवस्य पार्यन्तिकमेष्टव्यम् । तस्य प्रथमं कारणमर्थात् प्राप्तिस्थानं सगुणनिर्गुणात्मकं सनातनं शिवतत्त्वमेव । तच्च सकलनिष्कलभेदेन द्विधाभूतमपि सच्चिदानन्द-

विभवतया आनन्दरूपतया च स्वेच्छया परिवर्तते । तस्मादेव बिन्दुनादबीजानि त्रीणि तत्त्वानि निर्गच्छन्ति । बिन्दुः शिव एव । बीजं शक्तिरेव । तयोर्मिथः समवायः नादः । बिन्दोः रौद्री, नादाज्ज्येष्ठा, बीजाद्वामा, ताभ्यश्च रुद्रब्रह्मविष्णवः सञ्जायन्ते । ते क्रमेण ज्ञानेच्छाक्रियारूपाः, वह्निचन्द्रसूर्यस्वरूपा इति क्रमेण भिद्यन्ते । यथा–

**भिद्यमानात्पराद्बिन्दोरव्यक्तात्मा रवोऽभवत् ।**
**स रवः श्रुतिसम्पन्नैः शब्दब्रह्मेति गीयते[8] ॥**

सृष्ट्युन्मुखपरमशिवप्रथमोल्लास एव अखण्डोऽव्यक्तो नाद एव व्यापको ब्रह्मात्मकः शब्दः शब्दब्रह्मरूप इत्यर्थः । केचन शब्दार्थरूपं तत्, अपरे च शब्दरूपमेव इति समामनन्ति । केषाञ्चिद्-वादिनां मते तयोः शब्दशब्दार्थयोः शब्दब्रह्मत्वं वक्तुमशक्यम्, उभयोस्तयोर्जडत्वात् । फलतः सर्वभूतानां चैतन्यमेव शब्दब्रह्म इत्यागमिकाः । तदेव शब्दब्रह्म प्राणिनां देहमध्यगं कुण्डलिनीरूपं चैतन्यं गद्यपद्यादिभेदाद् वर्णात्मना आविर्भवति । बिन्द्वात्मकस्य शम्भोः सकाशात् कालबन्धोः कलारूपाद् जगत्साक्षी सर्वव्यापी सदाशिव उत्पन्नः, तस्मादीशः, तस्माच्च रुद्रविष्णुब्रह्माणः । अव्यक्तान्मूल-भूतान्नादाद् महत्तत्त्वादिक्रमेण जगदुत्पद्यते । महतस्त्रिविधो अहङ्कारः । वैकारिकादहङ्काराद् दशेन्द्रियाणि, तेषामधिष्ठातृदेवा दिग्वातार्कप्रचेतोऽश्विवह्नीन्द्रोपेन्द्रमित्राणि । तैजसादहङ्कारादिन्द्रियाणि मनःसहितानि तन्मात्रक्रमयुक्तानि । भौतिकादहङ्कारात् पञ्चभूतानि जज्ञिरे । गगनानिलानलाप्पृथिवीभ्यः शब्दस्पर्श-रूपरसगन्धाः पञ्चविषया उत्पद्यन्ते । ततो निवृत्तिः, प्रतिष्ठा, विद्या, शान्तिः, शान्त्यतीतेति पञ्चकला उत्पद्यन्ते । एतत्क्रमेण अग्निसोमात्मको देहो जायते, तस्मिन् देहे इडा, पिङ्गला, सुषुम्ना, गान्धारी, हस्तिजिह्वा, सुपूषा, अलम्बुषा, यशस्विनी, शङ्खिनी, कुहूरिति दशनाड्यः, मूलाधारादिषट्चक्राणि, तन्मध्ये सच्चिदानन्दघनरूपामात्मतत्त्वस्वरूपिणीं कुण्डलिनीशक्तिं भावयन्ति, आराधयन्ति, वशीकुर्वन्ति च । येनामरत्वं कुलेश्वरत्वं ब्रह्मज्ञत्वञ्चावाप्यन्ते । यथोक्तम्–

**एतस्याः परतः परात्परतरं निर्वाणशक्तेः पदं[9]**
**शैवं शाश्वतमप्रमेयममलं नित्योदितं निष्क्रियम् ।**
**तद्विष्णोः पदमित्युशन्ति सुधियः केचित्पदं ब्रह्मणः**
**केचिद्धंसपदं निरञ्जनपदं केचिन्निरालम्बनम् ॥**
**आरोप्यारोप्यशक्तिं कमलजनिलयादात्मना साकमेषु**
**स्थानेष्वाज्ञावसानेष्ववहितहृदयश्चिन्तयित्वा क्रमेण ।**
**नीत्वा नादावसानं रवगतकुलमहापद्मसद्मान्तरस्थां**
**ध्यायेच्चैतन्यरूपामभिमतफलसंप्राप्तये शक्तिमाद्याम् ॥**
**साक्षाल्लाक्षारसाभं गगनगतमहापद्मसद्मस्थहंसां**
**पीत्वा दिव्यामृतौघं पुनरपि च विशेन्मध्यदेशं कुलस्य ।**
**चक्रे चक्रे क्रमेणामृतरसविरसैस्तर्पयेद् देवतास्ता**
**हाकिन्याद्याः समस्ताः कमलजपदगां तर्पयेत् कुण्डलीन्ताम्[10] ॥**

कुण्डली कुण्डलीकारा वक्रीभूता निवासिनी ।
इडा च पिङ्गला चैव सुषुम्नानिलयं व्रजेत् ॥
शक्तिं भैरवसंयोगादमृतानन्दमानयेत् ।
चन्द्रमार्गेण वायुश्च पिबेतश्च शनैः शनैः ॥
कुम्भकञ्च यथाशक्त्या सूर्यमार्गेण रेचयेत् ।
सूर्यमार्गैः पिबेद्वायुं चन्द्रमार्गेण रेचयेत् ॥
शून्यञ्च प्रतिबिम्बचन्द्रसदृशं सूक्ष्मतिसूक्ष्मं पदं
सर्वं व्याप्य तमोमयं जगति सद्धामप्रकाशं परम् ।
दृश्यादृश्यविनाशभेदसकलं ज्योतिर्मयं सर्वतो
ध्यात्वा तच्च पदन्तु साधकवरैर्दूरीकृतश्चान्तकः ॥
एवमभ्यस्यमानस्य अहन्यहनि निश्चितम् ।
जरामरणदुःखाद्यैर्मुच्यते भवसागरात् ॥

शरीरस्य साधनत्वेऽपि शक्तिसाधनं विना योगस्य साधना अनुपपन्ना । नाना उत्कटकार्येषु पाशबद्धाः स्वावेशसंस्कारबुद्धिभेदक्रियाभेदादिभिः व्यस्ता भाग्यहीना जनाः शक्तितत्त्वं गुरुमुखान्न जानन्ति । अत्रान्तर एव भयानककालदूतेन हृतशरीरः शरीरान्तर्यात्रां प्रक्रमते ।

शक्तिभावसम्पन्नेन ज्ञानप्राप्तिरपि सुकरा भवति । अतो भावावलम्बनं सर्वशास्त्रेषु निगदं तत्त्वम्, शक्तिभावलाभं विना भौतिकजगतो भावजगतो वा मूलतत्त्वं ज्ञातुं न शक्यते, सिद्धीनां ध्यानादीनां कथैव का । अतोऽनुग्रहप्राप्तये भावोपासना विधातव्या । अनुग्रहप्राप्त्यनन्तरमेव महासुखप्राप्तसाधको योगो ज्ञानं भक्तिर्वा लब्धुं शक्यते । अस्यां प्रक्रियायां त्रैलोक्यपावनानां परमहंसानां गुरूणां वाक्यमेव हेतुः । तच्छ्रुत्वैव साधको योगी योगमवाप्नुयात् । आत्माभ्युदयसाधके मार्गे साधकानां गुरुसमीपस्थितिः विद्याभ्यासपरिश्रमश्च कर्तव्य एव । शाक्तं ज्ञानं शक्तिज्ञानपूर्वकमेव, शक्तिज्ञाने जाते ज्ञानक्रिया-मार्गयोर्विवेचना भवितुमर्हति । अतः सत्संस्कारलाभाय गुरुजनसंसर्ग आवश्यकः । सद्गुरोः करुणार्जनस्य लाभादेव सर्वेष्टसिद्धिः । यथा लवणसलिलसंयोगात् साम्यं सलिलैक्यं तथैवात्ममनसोरैक्यं जीवपरयोरैक्यञ्च अनर्थान्तरम् । स्वस्वरूपपरोक्षानुभवेन समाधिना ज्ञानम्, मुक्तिः, स्थितिः, सिद्धिः गुरुकृपया लभ्यत इति योगिसम्प्रदायव्यवस्था । योगिसम्प्रदाये प्राणेन्द्रियमनोबुद्धीनां परस्परं लयात् परिशेष्यादात्मनः शिष्टत्वादनायासेन आत्मलाभरूपयोगः सेत्स्यति, अत्र न सन्देहः । योगिसम्प्रदाये तुर्यावस्थायाः सहजावस्था इति भूयान् प्रयोगः, आसनकुम्भकाद्यनुष्ठानेन महाशक्तेः प्रबोधे प्राणः शून्ये (ब्रह्मरन्ध्रे) लीयते । प्राणलयात् स्वयमेव सहजावस्था प्रजायते । तदुक्तम्—

ज्ञानं कुतो मनसि सम्भवतीह तावत्
प्राणोऽपि जीवति मनो म्रियते न यावत् ।
प्राणो मनो द्वयमिदं विलयं नयेद्यो
मोक्षं स गच्छति नरो न कथञ्चिदन्यः[11] ॥

आत्मज्ञानेन मुक्तिः स्यात् तच्च योगादृते नहि ।
स च योगश्चिरं कालमभ्यासादेव जायते ॥
ज्ञानेनैव हि मोक्षो हि तेषां वाक्यं तु नान्यथा ।
सर्वे वदन्ति खड्गेन जयो भवति तर्हि किम् ॥
विना युद्धेन वीर्येण कथं जयमवाप्नुयात् ।
तथा योगेन रहितं ज्ञानं मोक्षाय नो भवेत् ॥
इन्द्रियाणां मनो नाथो मनोनाथस्तु मारुतः ।
मारुतस्य लयो नाथः स लयो नादमाश्रितः ॥

अनया कारिकया नादे मनसो लयः, स एव चित्तलयः मोक्षपदवाच्यः । चित्तलयस्य सुषुप्तावपि सत्त्वाद् मनःप्राणयोर्लये सति कश्चिन्निर्वाच्यः आनन्दः सम्प्रवर्तते । श्वासनिःश्वासयोर्लये अन्तःकरणवृत्तेः ध्येयाकारा वृत्तिर्जायते, सा सर्वोत्कृष्टा । एवंभूता उच्छिन्नसर्वसङ्कल्पा स्वानुभवगम्या वागगोचरा वृत्तिः योगिनामेव जायते । पुनर्वासनास्थानाभावाद् विषयज्ञानस्य विस्मृतिरेव लयशब्दार्थः । तदुच्यते–

अन्तर्लक्ष्यं बहिर्दृष्टिर्निमेषोन्मेषवर्जिता ।
एषा सा शाम्भवीमुद्रा वेदशास्त्रेषु गोपिता ।

अनया शिवसाक्षात्कारो जायते । उभे ज्योतिर्मयनेत्रयोः कनीनिके भ्रुवोर्मध्ये योजनात् तस्याश्च स्वल्पमूर्ध्वमुन्नयनाद् उन्मनावस्था जायते । एतदपेक्षया काचनापि उत्तमाऽवस्था नास्ति इति केचित् । एषैव संसारतारकोपायभूता पराकाष्ठात्मिका योगिजनावस्था । इडापिङ्गलयोर्मध्ये शून्यं यत् स्थानं तत्र स्थिता व्योमचक्रवासिनी खेचरी नाम्नी अवस्था । एषाप्यभ्यस्ता उन्मनीरूपेण परिणमते । भ्रुवोर्मध्ये शिवस्य स्थानं तत्र मनसो लयात् तदेव तूर्यपदं तत्र कालस्याभावः । तदुक्तम्–"भोक्त्री सुषुम्ना कालस्य" इति । योगिनां योगनिद्राऽपि कालरहितैव । समाधिनिष्ठेन योगिना ब्रह्माकारवृत्तितया सदा सर्वदैव ब्रह्मैवानुभूयते । सुषुप्ताविव सर्वचिन्ताविनिर्मुक्ततया अवस्थितिः पूर्णब्रह्मावस्थैव । अत एव योगवासिष्ठे ऋषे राममुद्दिश्य उक्तिरियम्–

सङ्कल्पमात्रकलनैव जगत्समग्रं
सङ्कल्पमात्रकलनैव मनोविलासः ।
सङ्कल्पमात्रमतिमुत्सृज निर्विकल्प-
माश्रित्य निश्चयमवाप्नुहि राम शान्तिम् ॥

इत्थं नादानुसन्धानपूर्वकं नादोपासनं हठयोगेऽपि समादृतम् । एष नादो वर्णनादपदेनाप्युच्यते । वर्णनादमाहात्म्यप्रक्रियायां श्रवणपुटे नेत्रयुगलस्य च घ्राणपुटे निरोधनेन प्राणायामेन शुद्धसुषुम्नामार्गे अमलनादस्य स्फुटं श्रवणम्, तस्य नादस्य आरम्भघटपरिचयनिष्पत्तिनाम्ना चत्वारो भेदा भवन्ति । तत्र राजयोगस्य साम्राज्यमिच्छता योगिना सर्वचिन्तापरित्यागपूर्वकं दत्तावधानेन नाद एवानुसन्धेयः । तेन मनोभुजङ्गमस्य वृत्त्युपशमात् सम्प्रज्ञातलक्षणः समाधिः सञ्जायते । नादस्यापि अन्तर्गतं मन एव, तस्य

